# श्रीदेवबोधकृतमहाभारततात्पर्यटीका

# ज्ञानदीपिका

## सभापर्वव्याख्यानम्

# Devabodha's Commentary on the Sabhāparvan of the Mahābhārata

Edited by

R. D. Karmarkar

Bhandarkar Oriental Research Institute

POONA

1949

# श्रीदेवबोधकृतमहाभारततात्पर्यटीका

# ज्ञानदीपिका

सभापर्वव्याख्यानम्

# Devabodha's Commentary on the Sabhāparvan of the Mahābhārata

Edited by

**R. D. Karmarkar**

Bhandarkar Oriental Research Institute

**POONA**

**1949**

# INTRODUCTION.

Devabodha's Commentary on the Bhīṣmaparvan, edited by Dr. S. K. Belvalkar was published by the Bhandarkar Oriental Institute in 1947. Dr. Belvalkar wrote in his Introduction as follows: "The B. O. R. Institute hopes before very long to publish that on the Sabhāparvan." As Dr. Belvalkar found himself too much pre-occupied with his onerous duties as General Editor of the Critical Edition of the Mahābhārata, to take up himself the work of editing Devabodha's commentary on the Sabhāparvan, he suggested to me that I should undertake the task, which I readily agreed to do.

The present edition of Devabodha's commentary on the Sabhāparvan is based upon three manuscripts ( $D_0$, $D_1$ and $D_2$ ) out of which two ( $D_1$ and $D_2$ ) had been made use of by the Editor of the Sabhāparvan while constituting the critical text. The third manuscript ( $D_0$ ) came into the possession of the Institute recently, and I was thus fortunately able to use it for the present edition of Devabodha's Commentary.

$D_1$ and $D_2$ have already been described on p. xv of the Introduction to the Sabhāparvan edited by Edgerton. $D_0$ belongs to the Kamat collection at the B. O. R. I. It is not very old and exhibits the same characteristics as have been noted about $D_1$ and $D_2$, viz., that the text accompanying the commentary found in the MS. is not definitely that of Devabodha; the commentary is corrupt and written not very legibly and rules of Saṁdhi are not infrequently ignored. It was possible, however, to fix up ( barring

two or three cases ) the text of the commentary with reasonable accuracy, by the collation of the three MSS.

The following is a detailed description of the MS.

$D_{11}$ : — Size $15\frac{1}{2}'' \times 6\frac{3}{8}''$. Extent 114 leaves, 8–9 lines to a page; 45 letters to a line.

Thick country paper; Devanāgarī characters; handwriting bold, clear and uniform; borders ruled in two double red lines, edges also ruled in double red lines and red ink used for colophons. folios numbered in both margins, left-hand edges of the folios 113, 114 and 115 slightly moth-eaten; fol. 9 missing; complete.

The MS. does not seem to be very old. Contains Sabhāparvan, with तात्पर्यटीका called ज्ञानदीपिका of देवबोध. The Tātparyaṭīkā contains notes on words and passages here and there from the Sabhāparvan.

On folio 16 there are two beautiful illustrations of Gajānana and Sarasvatī.

This MS. belongs to the B. O. R. Institute's collection of MSS and has been presented, among several others, by Mr. Divakar Bhalchandra Kamat of Bombay.

In the foot-notes, I have given all the cases where Devabodha selects a reading other than the one accepted in the Critical Edition. It would be seen that Devabodha's reading in a large number of such cases is in agreement with that in Ś1 K Ñ etc. The readings in the Critical Edition generally agree with those that have been commented upon by Devabodha. It would be safe to conclude therefore that Devabodha must have had before him a text akin more or less to the Śaradā or its allied Kashmirian text.

Devabodha is described as a parivrājakācārya in the colophon. Mr. M. V. Vaidya in his review of the Devabo-

dhaṭīkā on the Ādiparvan ( *ABORI*, xxiv, pp. 272–3 ) has rightly suggested that the exact date and location of Devabodha could be ascertained by researches into the lists of parivrājakas etc. that could be available in the Kashmir region. Investigation in this field is a desideratum.

Miss Sulochana Nachane M. A., Research Fellow, B. O. R. I., helped me in the collation of the three MSS. used for this edition; and Mr. M. V. Vaidya M. A., of the Mahābhārata Department, made many a valuable suggestion in the settling of the text and kindly corrected the proofs. I have to thank both of them for their help.

B. O. R. Institute,
Poona, 1–3–49.

R. D. Karmarkar

श्रीमहाभारते सभापर्वणि

देवबोधकृतमहाभारततात्पर्यटीका

# ज्ञानदीपिका

ॐ नमः । श्रीगुरुगोपाल[1]गौरीगणपतिभ्यः ॥

चैतन्यप्रभया साक्षात्कर्तुमान्तरपूरुषम् ।
ध्रियते देवबोधेन सभायां ज्ञानदीपिका ॥

अत्र सभापर्वणि सभालक्षणेनार्थेनोपलक्षिता धर्मादयः साभ्युपायाः पूर्वपक्षैरधर्मानर्थादिभिर्दुर्योधनादिप्रतिनायकचेतसि प्रतिबिम्बितैर्बाध्यमाना अपि तत्तदवान्तरोपाख्यानार्थैः परिपोषमनेकधा नीयमानास्तदुपायानामपूर्वतया चापुनरुक्तास्तात्पर्यार्थः ।

## १

**ततोऽब्रवीन्मयः पार्थं वासुदेवस्य संनिधौ** ( १ ) इत्यादेः **दिवीव देवा ब्रह्माणं युधिष्ठिरमुपासते** (अ० ४.३४) इत्यन्तस्य, ईश्वरेच्छाबृंहितस्य तीव्रेण तपसा परिपोषमुपनीतस्यार्जुनपौरुषस्य ध्वजभूता पाण्डवानां सत्कर्मविपाकायतनं सभा इति तात्पर्यार्थः ।

( १ ) **ततः** खाण्डवदाहानन्तरम् । ( ५ ) विश्वं सर्वं कर्म शिल्पं यस्य [ **विश्वकर्मा** ] । **महाकविः** शिल्पपण्डितः । ( ६ ) **एवं गते** ज्ञाते त्वयेति शेषः । ( ७ ) **काश्यपः**[2] का[क]श्यपापत्यम् । ( ८ ) **संदध्यौ** चिन्तितवान् । (९) **इह** मर्त्यलोके **यादृशीम्** उचितां मन्यसे । ( ११ ) **अभिप्रायान्** मनोवृत्तयः शृङ्गारवीररौद्रादिप्रभवाः । ( १२ ) विमानप्रतिमेति नाम [ **विमानप्रतिमां** ]

---

१ $D_1$ omits गोपाल; $D_2$ गोविन्द for गोपाल. २ Ed. दानव for काश्यप; Cd with $Ś_1$ K $Ñ_1$ $B_{1.6}$.

अथ वा विमानसदृशीम्। (१४) **सत्कृत्य** अभिनन्द्य। (१५) **पूर्वदेवाः** [**पूर्वदेव-**] दानवाः। (१६) **आश्वस्य** एकाग्रो भूत्वा **प्रचक्रमे** आरब्धवान्। (१९) **किष्कुः** हस्तः। **सर्वतः** आयामविस्ताराभ्याम्।

२

(५) **युक्तं** घटमानम्। (६) **स्वजनगामीनि** बान्धवेषु कुशलसंदेशरूपाणि। (७) **भासिनीं**[1] दीप्तिमतीम्। (८) पुरुषेभ्यः सद्भ्यश्चातिप्रकृष्टः **पुरुषसत्तमः**। (९) **भ्रातॄन्** पितृष्वसुः सुतान्। (१०) **तस्थुषां** स्थितवतां[2] **वरः** श्रेष्ठः सनातनः इति यावत्। (१४) **अभीषून्** प्रग्रहान्। (१८) **पीडितम्** विच्छेदेन दुःखितम् अथ वा **पीडितं** गाढं यथा भवत्येवं **परिष्वज्य**। (१९) **संविदं** पुनरेष्यामीति निश्चयं कृत्वा[3]।

३

(२) **भाण्डं** निर्माणोपकरणम्। (४) राज्ञा **वृषपर्वणा**। (५) **भारसहा** युद्धभारसहा। सुवर्णभारसहस्रेण **संमिता** निर्मिता। (७) **प्रागुदीचीम्** ऐशानीम्। (८) **भगवान्** पूजावान्। (११) **चित्याः** चयनानि **दृष्टान्ततः** दृष्टान्तेन उपमानेन निरुपमा इति यावत्, अथ वा **न तु दृष्टान्ततः** न तु कल्पसूत्रोक्ताः। (१३) **सहस्रयुगपर्यये**(षु) सहस्रगमनावधौ युगक्षये वा। (१४) **शिष्टसंप्रतिपत्तये**[4] शिष्टा वसिष्ठादयः तेषां संप्रतिपत्तये अनुमतये। (२१) **वर्चसा** तेजसा। (२२) **विपाप्मा** विगताः विगतसंबन्धाः पाप्मानः पुरुषाः यस्यां विक्लमा विगच्छति क्लमः श्रमो यस्यां [**विगतक्लमा**]। (२३) **बहुधना** बहुमूल्या। (२९) **सूपतीर्था** शोभनतटां। (३०) **उत** विस्मये। (३१) **अभितः** सर्वतः **सभाम्** इति कर्मप्रवचनीययुक्ते[5] द्वितीया। सूपतीर्था **मनोरमाः**। (३२) **पुष्करिण्यः** तडागाः। (३४) परिशब्दः आधिक्ये [**परिचतुर्दशैः**]।

---

१ Ed. भामिनीम् (Cd is wrongly cited as reading as in text); Cd by itself. २ D2 reads स्थितमनुज्ञाप्यतवतां (?) perhaps for अनुज्ञाप्य स्थितवतां. ३ D2 reads तथैव भीमसेनं कृत्वा in addition. ४ This is found only in D2 ५ Pāṇini 2. 3. 8.

४

( २ ) **अहतैः** अनुपभुक्तैः । ( ५ ) **मल्ला** बाहुयोधिनः । **झल्ला** लगुडयोधिनः । ( २० ) **कालकेयान्** कालकाया अपत्यानि । ( २५ ) **करूषाधिपतिः** दन्तवक्त्रः । ( २८ ) **रौरवाजिनवाससः** मृगचर्मपरिधानाः । ( ३१ ) **शम्पा**[1] तालविशेषः **प्रमाणे** चञ्चुपुटादौ ( ? ) लये द्रुतमध्यविलम्बितस्थाने [ **लयस्थाने** ] उरःशिरःकण्ठे । (३४) **दिव्यतानैः** गान्धारमूर्छनाभिः ।

५

**तथा तत्रोपविष्टेषु पाण्डवेषु महात्मसु** ( अ०५.१) इत्यादेः **न तु शक्यं तथा गन्तुं यथा तैर्नियतात्मभिः** ( अ०६.४) इत्यन्तस्य दृष्टार्था नीतयस्तात्पर्यार्थः । ( Appendix I, No. 2[2], line 4 ) **ऐक्यं** नानावाक्यैः राज्ञे योऽष्टाकपालो भवतीत्यादिभिरेकं प्रधानं तेन दर्शपौर्णमासजन्यमपूर्वमुत्पद्यते यत् । **नानात्वं** यागादीनां भेदः **संयोगः** कर्मणामङ्गाङ्गिभावः । **समवायः** संधिः तेषु । ( ७ ) **कच्चित्** प्रश्ने **कल्पन्ते** पठ्यन्ते उपेक्षाद्वेषाभ्याम् अर्थादीनामन्यतरस्मिन् । ( ८ ) **धर्मार्थ** इत्युपलक्षणं कामसहितामित्यपि बोद्धव्यम् । **त्रिषु**[3] धर्मार्थकामेषु धर्मार्थकामानामपि सजातीयविजातीयानुसंबाधात् । ( ९ ) प्रीतिरेव सारो यस्मिन् [ **प्रीतिसारेण** ] ( १० ) **विभज्य काले** पूर्वाह्णे धर्मं मध्याह्ने अर्थम् अपराह्णे कामम् । ( ११ ) **गुणैः** संधिविग्रहयानासनद्वैधीभावसंश्रयरूपैः सहितान् । सामदानभेददण्डोपेक्षामायेन्द्रजालानि सप्तोपायाः [ **सप्तोपायान्** ] । **बलाबलं** स्वस्य बलवत्ता परस्याबलवत्त्वम् । स्वस्य दुर्बलता परस्य बलवत्त्वम् । द्वयोरपि बलवत्ता द्वयोरपि दुर्बलत्वं च इति । चतुर्धा मिलित्वा **चतुर्दश** । अथ वा गजान् अश्वान् रथान् योधान् शस्त्राणि मित्राणि अन्नानि आसवं कोषं शृङ्गारादिरसान् अन्तःपुरं गुणानेतान् चतुर्दश । **समीक्षसे**[4] सम्यग्जानासि ज्ञात्वा च कार्यं कुरुष्व इत्यर्थः । ( १२ ) अष्टौ कर्माणीति [ **कर्माणि अष्टौ** ]

---

१ Ed. शम्या ; **Cd** seems to read शम्पा and not शम्या. २ The stanza commented upon appears to be, न्यायविद्धर्मतत्त्वज्ञः षडङ्गविदनुत्तमः । ऐक्यसंयोगनानात्वसमवायविशारदः । Ed. and Ś$_1$ K$_{1-3}$ Ñ$_1$ do *not* read this. ३ Ed. नृषु ; **Cd** with K$_{2,3}$ Ñ$_1$ V$_1$ B$_{4,6}$ Dn D$_{4,6}$. ४ Ed. परीक्षसे ; **Cd** with B$_{1,5}$ D.

कृषिर्वाणिक्पथो दुर्गः सेतुः कुञ्जरबन्धनम् ।

खन्याकरकरादानं शून्यानां च निवेशनम् ॥ (Kāmandaka 5.77)

इति । अथ वा देशरक्षाश्रवणम् आयश्रवणं व्ययश्रवणं पौरकार्यदर्शनं प्रतिगृहं स्नानभोजनं [ स्थाननियोजनं ? ] हस्त्यश्वायुधदर्शनम् अश्वसाधनमित्येवमष्टौ । ( १३ ) सप्त प्रकृतयः [ **प्रकृतयः सप्त**[1] ]

स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च । ( Śukra 1. 61)

अथ वा

दुर्गाध्यक्षो ब[ध]नाध्यक्षो धर्माध्यक्षश्च भूपतिः ।

दूतः पुरोधा दैवज्ञः सप्त प्रकृतयः स्मृताः ॥

**आढ्याः** समृद्धाः **अव्यसनिनः** व्यसनशून्याः । ( १४ ) **कृतकैः**[2] अभिप्रायः **भिद्यते** प्रकाश्यते सूचकैः मुखाद्याकारैः **अपरिशङ्कितैः**[3] सुप्तछन्नप्रतिष्ठैः युष्टाश(?)-मित्यपरिज्ञातैः । ( १५ ) **उदासीने** शत्रुमित्राभ्यां परतः मध्यमे मित्रे वृत्तिं यथार्ह-व्यापारम् **अनुवर्तसे** अनुवर्तयासि । ( १६ ) **आत्मसमा** विश्वासेनायत्ता **बुद्धाः**[4] बोद्धारः **शुचयः** उपधाशुद्धाः **जीवितक्षमाः** मन्त्रिणः । ( १८ ) **निद्रावशं** निद्रापारतन्त्र्यं । ( १९ ) **एकः** स्वयमेव **बहुभिः** त्रिचतुरैः षट्कर्णे मन्त्रभेद-प्रसङ्गात् । द्वौ मन्त्रयेतामिति तात्पर्यार्थः । ( २१ ) **कर्मान्ताः** कृष्यादयः **परोक्षाः** स्वयमदृष्टाः **विशङ्किताः** अधिकारिभिरितो गृहीतमगृहीतं वेति शङ्का-स्पदीभूताः । **उत्सृष्टाः** त्यक्ताः कच्चित् इत्यनुवर्तनीयम् । **संसृष्टिः** संसर्गो नित्य-सांनिध्यम् । यद्वा सर्वे कर्मान्ताः कोषबलवर्धनहेतवः । आयव्ययस्थानानि च । ते च दुर्गसेतुबलखन्यशून्यानिवेशाः । खनित्रव्यवहारहस्तिपथकृषिकान्ताराः परोक्षा नित्यं परप्रत्यपेक्षाः कोषवृद्धिहेतवः साधनपुष्टिहेतवश्च प्रत्यक्षानुमानादिति राज्ञा ज्ञातव्याः । अल्पव्यथा महोदयाः[5] । येषु कर्मस्थानेषु पुरुषा उत्सृष्टा नियुक्ता ते च येऽविशङ्किता किं कृतं किं मन्त्रणं किमानीतं को व्यपद्यो ये वा अत्र

---

१ Ed. षट्ट ; **Cd** with Ś1 K B2. 4 D'n D1. 4. २ Ed. कच्चिन्न तर्कैः ; **Cd** seems to have read कच्चित्कृतकैः by itself. ३ Ed. ... परिशङ्किताः. ४ Ed. बुद्ध्या ; **Cd** with D1. 2. ५ **Cd** seems to have read महोदयाः.

निराशङ्कयमाना यथेष्टव्यवहारमुद्रया(?)दिति संसृष्टं **चात्र**[1] कारणम्। असंसृष्टं दोषाय क्रियमाणं च गुणवत्संसृष्टं भवति । (२२) **अनवाप्तानि** अनिष्पन्नफलानि। (२३) करणेन शुद्धोपकरणेन चरन्ति इति **कारणकाः**[2]। **कारयन्ति** शस्त्रशिक्षां पुमान्[3] (?) राजपुत्रान् । (२४) **अर्थकृच्छ्रेषु** अर्थापत्सु **निःश्रेयसं** कल्याणम्। (२५) **सर्वाणि** गिरिदुर्गादीनि । (२७) **अन्येषु** शत्रुषु **तीर्थानि** वार्तास्थानानि । **अष्टादश** तद्यथा मन्त्रिपुरोहितसेनापतियुवराजदौवारिकान्तर्वंशिकप्रशास्तृसमाहर्तृसंविधान्। उपदेष्टृनायकपौरव्यावहारिककर्मान्तिकमन्त्रपरिषदध्यक्षदण्डपाणिदुर्गपालाटविका इत्यष्टादश । अथ वा रिपूणां भिदः (?) आलस्यं भयम् आज्ञातिक्रमः शोकः क्रोधः दैन्यं रागमोहपरार्थना ईर्ष्या अभिमानविधिज्ञाकृपाः तथा जुगुप्सा कामोऽनृतमित्यष्टादश । अथ वा कोषजनपददुर्गदण्डामात्यमन्त्रा एतान्येव षट्। अन्येषु अरेररिमित्रस्य अरिमित्रमित्रस्य चेत्यष्टादश। अथ वा संधिविग्रहयानासनद्वैधीभावसंश्रया अरेर्मित्रस्योदासीनस्येत्यष्टादश। **स्वपक्षे** आत्ममित्रोदासीनेषु त्रिषु मन्त्रवर्जं कोषजनपददुर्गदण्डामात्या इति पञ्चदश । एकस्य द्वयोश्च प्रमादादिना अन्यथापि ज्ञानसंभवात् **त्रिभिः** इत्युक्तम्। ते च त्रयः एकत्रसंस्थः संचारको निवेदकश्चेति । अविज्ञातैः अनुपलक्षितैः । तथा च स्वपक्षे परपक्षे चाष्टादशैव तीर्थानि भवन्ति। षट्वर्गानिह कृतार्थतामनुभवन्ति तत्तीर्थमुच्यते । ते परपक्षे तावत्

स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च ।
शयनासनयानानि (?) राजपुत्रकलत्रकम् ।
अन्तर्वंशिकसंस्थानं विहारापणगुल्मकम् ।

इति । स्वपक्षे स्वामिराजपुत्रकलत्रं च विहाय पञ्चदश । **त्रिभिः** उत्तमाधममध्यमैः **त्रिभिः** संख्यातैः । उक्तं च ।

एकं न चारयेत् क्षेत्रे द्वाभ्यां संवदनं भवेत् ।

1 **Cd** चात्र (for ह्यत्र of Ed.), with Ñ1 B2-5 Dn. 2 Ed. कारणिकाः; **Cd** by itself. 3 पुमान् seems to be a mistake for कुमारान्.

इति । नैको मन्त्रं कुर्वीतेति च । **अविज्ञातैः** परस्परमनभिज्ञातैः एवंभूतैः **चारैः** कृत्वा (?) तीर्थानि जानासीत्यर्थः । (२८) **अविदितः** किं करोतीति **प्रतिपन्नः**[1] सावधानः । **नित्यो युक्तो**[2] नित्योद्योगी । (२९) **विनयो** यथार्हप्रवृत्तिः शास्त्रजज्ञानं वा । **कुलपुत्रः** कुलजः **पुरोहितः अनसूयुः** दोषारोपेण परगुणानामनाच्छादकः । **अनुप्रष्टा** शास्त्रचर्चकः । (३०) **ऋजुः** अकुटिलः । (३१) **अङ्गेषु** शिक्षादिषु **निष्णातः** प्रवीणः **प्रतिपादकः** व्याख्याता । (३३) उपधा परीक्षा तामतीताः [**उपधातीतान्**] धर्मार्थकामेषु न परीक्षणीयाः सुपरीक्षिता एवेत्यर्थः । (३५) **अवजानन्ति** अवमन्यन्ते **याजकाः** ऋत्विजः **उग्रं**[3] क्षत्रियेण शूद्रायां जातं **प्रतिग्रहीतारं** क्षत्रियं **कामयानं** स्त्रीषु अन्यत्रासक्तिसहितम् इवेति त्रिषु योजनीयम् । अथ वा **उग्रं** निष्ठुरं **प्रतिग्रहीतारं** प्रतिकल्पेन गच्छन्तं **कामयानं** निवृत्तकामामपि स्त्रियं कामयन्तम् **पतितं** पातकादिना एवंभूतं पुरुषं यथा **स्त्रियः** त्यजन्ति तथा **याजकाः त्वां कच्चित्** त्यजन्ति इत्यन्वयः । यद्वा स्त्रियः इव यथा स्त्रियः पतितं चाण्डालादिकं वर्जयन्ति उग्रं नित्यं परुषशीलं प्रतिग्रहीतारं स्त्रियः एवं धनं ग्रहीतुकामं कामयमानं नित्यं निष्ठुरप्रसारम् । उक्तं हि सकृत्कामनिषेवी हिंस्यः स्त्रीणां वल्लभः पुमान् इति । एतेन उग्रदण्डादि मा (सं)भवेदिति नारदशिक्षा ज्ञातव्या । **प्रतिग्रहीतारं** नित्यमा(द)दानशीलं न तु दातारं **कामयानं** न धर्मप्रधानं सर्व[2] एव व्यतिरेकेण दृष्टान्ताः । (३६) **धृष्टः** प्रगल्भः सभायोग्यो वा **शूरः** अकातरः **मतिमान्** विपद्यपि अविपन्नमतिः । अवसादे सत्यपि कामादीनामनुत्तेजको मनोधर्मः धृतिः । **शुचिः** संकरवर्जी । **दक्षः** अनलसः । (३७) **दृष्टावदाना**[4] दृष्टरिपुखण्डनाः । (३८) **वेतनं** प्रगल्भं **न विकर्षसि** न तनूकरोषि **भक्तं** अहरहर्वेतनं । (४१) संपरायः परलोकः संग्रामो वा तत्र नियुक्तान् **सांपरायिकान्** । (४२) पुरुषः स्वामिनि सर्वभावेन प्रवृत्तः पुरुषः

१ Ed. प्रतियत्तः; N (except $Ś_1$ $K_1$ $D_4$; $K_4$ om.) with **Cd**. 2 Ed. नित्यशुक्तो; **Cd** with $K_2$ $B_{1-3}$ $D_2$. ३ Ed. उग्रप्रतिग्रहीतारं; **Cd** with $K_2$ $V_1$ $B_{1.3.4}$ $Dn_1$ $D_{1.3.5}$ उग्रं प्रतिग्रहीतारं. ४ Ed. दृष्टापदाना; **Cd** with $B_{1.3.4.6}$ $D_{2.3}$ $T_1$ $G_4$ M. 2 $D_2$ reads मूल्यं.

**छन्दसा**[1] स्वामीच्छया । ( ४३ ) **विनीतान्** उचितकारिणः **ज्ञानविशारदान्** । पण्डितान् । ( ४६ ) **पृथिव्याः** पृथिवीवासिनो जनस्य **समो** मध्यस्थः पक्ष-पातितया शङ्काविषयः **अभिशङ्क्यः**[2] पक्षपातिता । ( ४७ ) मन्त्रिबलं भृत्यबलं मित्रबलं च **त्रिविधं** **पार्ष्णि**[3] पृष्ठगोप्तारं ( शे )**मूलं** परं ( ४८ ) **व्यवसाय**[4] निश्चित्य **पराजयं** भङ्गं बलस्य[5] (४९) **रत्नानि** लोभनीयानि **प्रयच्छसि** भेदायेति शेषः । (५१) **स्वधिष्ठिताः**[6] शोभनेन पुरुषेणाधिष्ठिताः **विधिवद्गुणा** विधिर्यथा संधिविग्रहादयो गुणाः । ( ५२ ) **मूलं** स्थानपुरुषः अथ वा

यस्य स्फीतो जनपदः संपन्नः प्रियराजकः ।
संतुष्टभृत्यः स च वै दृढमूलः स पार्थिवः ॥

( ५३ ) रथा नागा हया योधाः पत्तयः कर्मका( र )रिकः ।
चारा देशिकमुख्याश्च ध्वजिन्यष्टाङ्गकं मतम् ॥

**चतुर्विधं बलं** मौलमित्रभृत्याटविकम् । **बलमुख्याः** सेनापतयः तैः **सुनीताः** प्रयुक्ताः । ( ५४ ) सस्यानि लूयन्तेऽस्मिन्निति **लयः**[7] सस्यलवनकालः **मुष्टिः** सस्यसंग्रहकालः । ( ५६ ) **अभ्यवहारीणि**[8] भक्ष्याणि **गात्रसंस्पर्शकानि** अनुलेपनानि । **घ्रेयाणि** कुसुमादीनि **अनुमताः** आप्ताः । (५७) **कोष्ठं** धान्यागमं **द्वारमायुधं** आयोधनागमः । **कृतकल्याणैः** कल्याणकारित्वेन सुपरीक्षितैः । **आभ्यन्तरेभ्यः** दारादिभ्यः **बाह्येभ्यः**[9] पौरादिभ्यः **अग्रे** प्रथमम् **आत्मानं** तदनु **तांश्च** आभ्यन्तरान् । आभ्यन्तरेभ्यो बाह्यान् बाह्येभ्यः आभ्यन्तरान् **मिथश्च तान्** आभ्यन्तरान् बाह्येभ्यो बाह्यान् आभ्यन्तरेभ्य इतरेभ्य इति । यद्वा आभ्यन्तरा अमात्यनर्मसचिवराजपुत्राश्च बाह्या दौवारिकदण्डपाणिकपुराध्यक्षादयः । एतेभ्यः एकैकशो मिलितेभ्यश्चात्मा तत्त्वनीतिगुणोपसंधानेन रक्षणीयः । अग्रे प्रथमं सर्वत एवात्मानं गोपायीतेति सूत्रणात् । तांश्चाभ्यन्तरान् बाह्यांश्च यदा स्वेभ्य आभ्यन्तरा

१ **Cd** seems to have read छन्दसा. २ Ed. नाभिशङ्क्यः; **Cd** with Ñ1 V1 B2–5 Dn D3. 5. 6 समश्चानभिश..., but all the three MSS. of **Cd** do not show समश्चानभिशङ्क्यः. ३ Ed. पार्ष्णिमूलं; **Cd** with K2. ४ Ed. व्यवसायं; **Cd** with K4 B1. ५ D2 स्वबलस्य. ६ Ed. स्वनुष्ठिताः; **Cd** with B1. 2. 4. ७ Ed. लवं; **Cd** by itself लयं. ८ Ed. अभ्यवहार्याणि. ९ D2 omits बाह्येभ्यः पौरादिभ्यः.

एवामात्या (?) अन्योन्यं विकुर्वन्ति तथाभ्यन्तरकोपान्महान् नीतिदोषः स्यादतः **सामञ्जस्येन** रक्षणीया एवं बाह्याखान्योन्यावप्रतिपत्तौ रक्षणीया अन्यथा बाह्यप्रकोपात्। सत्काराभावेऽपि नान्तः स्यात्। मिथश्चैतान् आभ्यन्तरेभ्यो बाह्येभ्यः आभ्यन्तराश्च रक्षणीया इति कच्चिदित्यर्थः। (५९) **प्रतिजानन्ति** ज्ञानात् प्रतिकल्पं कुर्वन्ति अपनयन्तीति यावत्। (६०) **आयस्य** उत्पत्तिपादभागैः **त्रिभिः** एव **व्ययं** कुर्यात् चतुर्थं रक्षेदिति भावः। (६१) **दुर्गतान्** दरिद्रान् **गणका**श्चाय व्ययलेखकाः। (६२) अनुतिष्ठन्ति निवेदयन्ति। (६३) **अनुप्रियान्** अनुपश्चात् परोक्षेऽपि प्रियानिति भावः। **किल्बिषं** दोषम्। (६७) **देवमातृका** वृष्टिनिष्पादसस्या। (६८) **शतं** प्रत्येकैकं **प्रतिकं** अथ वा एकशः कं शिरः कं प्रति **प्रतिकं** प्रतिपुरुषमित्यर्थः। शतम् इत्युपलक्षणं सहस्रप्रभृत्यपि बोद्धव्यम्। **वृद्ध्या** उचितयेति शेषः। (६९) **वार्त्ता** कृषिपाशुपाल्यवाणिज्याः। (७०) **पञ्चसु**[1] कोषदुर्गजानपददण्डामात्येषु प्रत्येकं पञ्च पुरुषाः। पञ्च कुलानीति यावत्। अथ वा ग्रामादिषु पञ्चसु पञ्च पुरुषाः। तद्यथा

> ग्रामस्याधिपतिं कुर्याद्दशग्रामपतिं तथा।
> विंशतीशं शतेशं च सहस्रपतिमेव च॥ [Manu. 7. 115]

इति। **क्षेमो** लब्धपरिपालनं **संहत्य** ऐकमत्येन। यथा पञ्चसु स्थानेषु पञ्चग्रामदशग्रामशतग्रामसहस्रग्रामविषयपतिलक्षणेषु। **स्वनुष्ठिताः** रक्षिता एवंभूताः कच्चित्। **तव** जनपदे **क्षेमम्** आपन्निवारणं कुर्वन्ति यथा सुखेन जना अधिवसन्ति कुर्वन्ति। **संहत्य** मिलित्वा इति च। ग्रामिकः ग्रामकार्यं पञ्चग्रामिकाय निवेदयति इत्येवं विषयपतिपर्यन्तं निवेदयन्ति। स च राजनि इत्येवं क्रमेण संहतम् इत्यर्थः। (७१) **ग्रामाः** शाखानगराणि **रक्षा** इति ग्रामाणां संज्ञा शाखानगरं प्रतिबद्धा। **तदर्पणा** नगरादीनां तस्मिन्नगरे अर्पणं येषां। (७२) **बलेन** सेनया **समानि** अदुर्गाणि **विषमाणि** दुर्गाणि च **पुराणि चौराः**[2] इति पूर्वचौरा एव मर्मज्ञत्वात् संप्रति रक्षार्थं नियुक्ता इष्टसाधका इति यावत्। (७३) **सान्त्वयसि** साम-

---

१ Ed. पञ्च स्वनुष्ठिताः; **C**d seems to read पञ्चसु ; but has स्वनुष्ठिताः as well.
२ Ed. पुराणचौराः ; **C**d पुराणि चौराः.

प्रयोगेण प्रीणयसि **श्रद्दधासि** तथेति प्रत्ययं करोषि । **गुह्यं** गोपनीयं **भाषसे** प्रकटयसि । ( ७५ ) **प्रथमौ** इति द्वितीयतृतीयौ । ( ७६ ) **समलंकृतान्** संनद्धान् **मन्त्रिभिः** द्रष्टुं मन्त्रिणः प्रेरयसीति यावत् । ( ७९ ) **नियमेन** उपवासादिना । **वृद्धसेवाभिः** वृद्धसेवाजनितैः ज्ञानैः । ( ८० ) कायबालग्रहशल्यदंष्ट्राबलिप्रणिधाविषरोगा **अष्टाङ्गानि** । अथवा रोगो रोगहेतुः । आरोग्यम् आरोग्यहेतुः तल्लक्षणानि चैवेत्यष्टाङ्गानि[1] । ( ८१ ) **अर्थिप्रत्यर्थिनः** वादिप्रतिवादिनः **शासासि**[2] क्षयसि । ( ८४ ) पूर्वं यो रिपुस्त्वया **बलेन निपीडितः** स च **दुर्बलः** सन् **मन्त्रेण बलवान्** भवति कालान्तरे वा **उभाभ्यां** मन्त्रबलाभ्यां बलवान् भवति गुणैतो[3]ऽर्थी प्रवर्तते । अर्थी भूत्वा स्वगुणान्प्रकटयति । ( ८८ ) **तवाध्यक्षं** तव प्रत्यक्षं । ( ८९ ) **नैकचित्तान्**[4] अनेकचयनान् । ( ९१ ) **एषा** अनन्तरोक्ता । ( ९३ ) **क्षारितः** मिथ्यापवादैः पातितः । ( ९४ ) **पृष्टो** तदनन्तरमेव **तत्कारी** अवि( कल )लम्बतयान्यैर्विदितः **प्राज्ञैः**[5] अविकलज्ञानैः **दृष्टः सकारणः** सलोप्त्रः । ( ९५ ) **व्युत्पन्नान्**[6] व्युत्पत्तौ संशयच्छेदेन निश्चये जाते इति यावत् सुनिश्चितान् । ( ९६ ) **नास्तिक्यं** परलोकाभावज्ञानम् **अनृतं** वाङ्मानसयोर्विसंवादः । **क्रोधः** हन्तव्यबुद्धिः यस्मिन् जाते प्रज्वालितमिवात्मानं[7] मन्यते । **दीर्घसूत्रता** निरक्रियता । **आलस्यं** कायादीनां गुरुणा तमसाधिष्ठितत्वात् करणीयेऽप्यप्रवृत्तिः । **क्षिप्तचित्तता** मनोराज्यम् । ( ९७ ) एकेनैव चिन्तनम् **एकचिन्तनम्** । **अनर्थज्ञैः** अदृष्टार्थैः **अनारम्भः** अनुद्योगः **अपरिरक्षणं** भेदः । ( ९८ ) **अमङ्गल्यस्य**[8] आज्यादौ मुखावलोकनादेः **प्रयोगः** उपकरणं **प्रसङ्गः** अत्यासक्तिः । ( ९९ ) **शीलं** स्वभावशुभा वृत्तिः **वृत्तम्** आचारः । ( १०३ ) **अवहार्यन्ते** दाप्यन्ते । ( १०४ ) **पण्यानि** भक्तभोज्यवस्त्रादीनि ।

---

१ After चैवेत्यष्टाङ्गानि, D2 reads :

निदानं पूर्वरूपाणि रूपाण्युपशमस्तथा ।
संप्राप्तिश्चौषधं रोगपरिचारक एव च ॥ इति

२ Ed. प्राप्तानपास्यसि; **Cd** seems to have read प्राप्तान् न शासासि. D2 reads शिक्षयासि for क्षयासि. ३ गुणेनाधिप्रवर्तते, in D0. ४ Ed. नेकचित्तो ; **Cd** with Ś1. ५ Ed. तज्ज्ञैः ; **Cd** with Ś1 B1-3 D4 K ( K3 om. ). ६ Ed. व्युत्पन्ने. ७ D2 has this clause प्रज्वलित...मन्यते for प्रज्वलति in D0 and D1. ८ Ed. मङ्गलस्याप्रयोगं च ; **Cd** with B1-4 Dn D1-3. 5. 6.

**उपधाभिः** छद्मभिः । ( १०६ ) **कृषितन्त्रं** कृषिक्रिया **गोषु पुष्पफलेषु** नवेषु इत्यध्याहरणीयं **दीयते मधुसर्पिषि** इति नृदेवतर्पणं[१] क्रियते इत्यर्थः । ( १०७ ) **चातुर्मास्यं** वर्षाशरदृतुद्वयम् **अवरम्** अर्वाक् **द्रव्योपकरणं** लोहादि । ( १०९ ) **सूत्रं** संक्षिप्तोपदेशः । ( १११ ) **ब्रह्मदण्डः** अभिचारः ।

६

**तं**[२] **तु विश्रान्तमासीनं देवर्षिममितद्युतिम्** ( 78* ) इत्यादेः **त्वत्तः श्रोतुमहं सर्वं परं कौतूहलं हि मे** ( अ० ११.५१ ) इत्यन्तस्य अदृष्टतरतादृक्सभाप्रभावप्राप्तिसमुन्मीलदहंकाराणां पाण्डवानामहंकारावच्छेदी यत्तदधिकगुणपुरंदरादिसभास्तात्पर्यार्थः । ( ९ ) **स्मयन्** युधिष्ठिराहंकारोपलम्भनात् । ( 79* ) **अभिप्रायैः**[३] अभिप्रायसूचकैः मुखाद्याकारैः ।

७

( २ ) **अध्यर्धं** सार्धम् **वैहायसी** खेचरी । ( १८ ) **वायवः** किंविशिष्टाः **स्तनयित्नवः** सशब्दाः । ( २६ ) **पुष्करमालिनी** नाम्ना ।

( २ ) **भूयसी** महती । ( ३१ ) **असंबाधा** असंकीर्णा । ( ३३ ) **संन्यासिनः** अनशनविधिना अमृताः (?) । ( ३४ ) **परिबर्हैः** परिच्छदैः ।

९

( ३ ) **अवतानैः** लताभिः । ( ५ ) **सिता** बद्धा ।

१०

( ३ ) **विषक्ता** संलग्ना । ( ८ ) **मनः** चित्तं **हृदयं** कदम्बगोलकाकृतिमांसपिण्डः ।

११

( १ ) **देवयुगे** कृतयुगे । ( ६ ) **तथायुक्तैः**[४] पानलेपनकारिभिः तथा

---

१ D2 पितृदेव-. २ Ed. does not read this. ३ Ś1 K2.4 B1.2.4.5 Dn D3-5 read after st. 12 in Ed. दिव्यां दिव्यैर**भिप्रायै**रुपेतां विश्वरूपिणीम्, and Cd seems to comment on अभिप्रायैः in this line. ४ Ed. तथा युक्तैः; Cd seems to read तथायुक्तैः as one word.

युक्तं योगो यस्यां **मायया** विशेषज्ञानेन। (९) **संस्थानं** अवयवविशेषः। (१२) चन्द्रसूर्यादीनतिक्रम्य [**अति चन्द्रं च सूर्यं च**] आह्लादकत्वेन भास्वरत्वेन ज्वालामयत्वेन च **स्वयंप्रभा** स्वयंप्रकाशा। (१३) **विदधत्** लोकान् **देव-मायया** दिव्येन ज्ञानेन। (१६) निर्विकारम् आकाशादि **यच्चान्यत्कारणं**। (१७) **नक्षत्राः** न पूर्वरूपात्प्रच्युतवन्तः। (१८) धर्माधर्मपूर्ववासना[1]ः। (१९) **विंशतिः सप्त** नक्षत्राणि। (२१) **रथंतरः** सामब्राह्मणम् **नाम[2]द्वन्द्वैः** नाम-युग्मैः। (२४) **ग्रहाः** सोमपात्राणि **उपवेदाः** गन्धर्ववेदादयः। (२५) **सप्तविधा[3]ः** संस्कृतप्राकृतपैशाचिकापभ्रंशलौकिकच्छेकार्भकवाण्यः। (२८) संवत्सरपरित्सरे-द्वत्सरानुवत्सरवत्सरा इति **पञ्च[4] युगं** कृतादि। **अहोरात्राः** अहश्च रात्रिश्च सन्ध्याद्वयं चेति। अथ वा मानुषोऽहोरात्रः षष्टिघटिकाः। चैत्रो मासः दैवो वत्सर ब्राह्मकल्पादि इति **[5]चतुर्विधः**। **कालचक्रं** द्वादशराशिकम् **नित्यम्** उत्पत्तिध्वंस-शून्यम् **अक्षयं** पूर्वस्माद्रूपादच्युतम् **अव्ययं** सर्वस्माद्गुणादहीनम्। (३४) **ऊर्ध्व-रेतसाम्** आयमितरेतसाम् **प्रजावताम्** अपत्यवताम्। (३८) **प्रतिगृह्य** स्वीकृत्य **सा[6]न्त्वं** मधुरं **मानः** पूजा **अर्थः संभोगः** सुखानुभवः। (३९) **उप-यातैः** आयातैः **प्रतियातैः** प्रतिगच्छद्भिः। (४७) **उद्देशः** संक्षेपः। (५२) **यन्मां पृच्छसि राजेन्द्र हरिश्चन्द्रं प्रति प्रभो** इत्यादेः **आपृच्छे त्वां गमिष्यामि दाशार्हनगरीं प्रति** (अ० ११. ७२) इत्यन्तस्य द्रोणदुर्योधना-दीनामियत्या सामग्र्यानुरूपसंहारगुरुसंभावनां मन्यमानेनेश्वरेण प्रेरितो नारदो युधि-ष्ठिरस्य प्रवृत्तिहेतुफलमभिधाय पृथिवीभारावतारणाय सहकारिकारणान्तरं राजसूय-मवतारयतीति तात्पर्यार्थः। (५३) [**सम्राट्**]

येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः।
शास्ति यश्चाज्ञया राज्ञः स सम्राट् परिकीर्तितः॥ (Amara. 2. 8. 3)

१ This seems to be the explanation of हर्षो द्वेषस्तपो दमः. २ Ed. नाना-द्वन्द्वैः; **C**d with K Ñ1 B D M1. ३ Ed. वाणी सप्तविधा; **C**d by itself. ४ Ed. पञ्चयुगं. ५ Ed. चतुर्विधाः; **C**d seems to have read अहोरात्रः. ६ MSS. सान्तं.

( ५४ ) [ **द्वीपाः सप्त** ]

जम्बूद्वीपः कुशद्वीपः शाकः क्रौञ्चश्च शाल्मलिः ।
गोमेदः पुष्करश्चैव सप्त द्वीपाः प्रकीर्तिताः ॥ इति ।

( ५६ ) **परिवेष्टारः** पात्रे अन्नव्यञ्जनानि निक्षिपन्तः । ( ५८ ) **प्रासर्पकाले** अग्निविसर्जनकाले । ( ६५ ) **त्वांमाह**[1] त्वां वदति । ( ६७ ) **संकल्पं** कामं **गन्तारः स्थ**[2] गन्तारो भवथ । ( ६९ ) **पृष्ठसवनं**[3] अवभृथः युद्धमेव पृष्ठसवनमिव पृष्ठसवनम् साधर्म्यं युद्धेऽपि हि रक्तस्नानम् । **किंचिदेव** अनवधारितस्वरूपम् । ( ७२ ) **एवमाख्याय पार्थेभ्यो नारदो भगवानृषिः**[4] इत्यादेः, **सर्वैर्गुणैर्महाराज राजसूयं त्वमर्हसि** ( अ० १३. १ ) इत्यन्तस्य राजसूयाधिकारपरामर्षे[र्शे] युधिष्ठिरस्य कृष्णवचनाद्राजसूयस्यासंशयं कर्तव्यता तात्पर्यार्थः ।

## १२

( ३ ) **यज्ञानां यज्ञम्**[5] इति यज्ञान्तरेभ्यः साम्राज्यलक्षणेन गुणेनाभिप्रायस्तेन राजसूयस्पष्टार्थकरणं निर्धारणम् । ( ७ ) **अविशेषेण** स्वसमानतया । ( ११ ) **येन** राजसूयेन **वारुणं गुणं** वरुणभावं सम्राड्गुणं सम्राड्भावः **सम्राड्गुणार्हस्य** सम्राड्भावार्हस्य । ( १२ ) **समयम्** अनुष्ठानम् । ( १३ ) **क्षत्रसंपदा** क्षत्रियोचितया धनसहायसंपदा । **साम्ना** सामवेदेन **षडग्नयः** षड्यज्ञाः । ते च अग्निष्टोमक्षत्रधृतिव्युष्टिद्विरात्रसप्तपेयसप्तदशपेयाः । ( १४ ) **दर्वीहोमः** प्रथमहोमः **प्राप्नोति**[6] व्याप्नोति । ( १६ ) **धृष्टं** प्रगल्भम् **इष्टम्** अभिमतं **वरिष्ठम्** उत्तमम् । ( १९ ) **कथं भवेत्** फलवतीति शेषः । कथं यज्ञो निष्पद्येत कथं च लोका न नश्येयुरिति विमर्शः। ( २३ ) **सामर्थ्यं**[7] शक्तिः **योगम्** उपायं **क्षयागमौ**[8] हान्युपचयार्थौ[9] **सम्यक्च कुर्वन्** चकारादसम्यक्

१ Ed. च त्वाह; Cd with B1.6 D1.2. २ Ed. गन्तारस्ते; Cd with Ś1 B2.4. ३ Ed. पृष्ठगमनं; Cd by itself. ४ Ed. जनमेजय; Cd with Ś1 K4 D1.2. ५ Ed. यज्वानं यज्ञं; Cd with K2.3 B3 D1.2. ६ Ed. प्राप्नुते. ७ Ed. सामर्थ्ययोगं. ८ Ed. व्ययागमौ; Cd with Ś1 K1.2.4 D1.2 G2. ९ D2 हान्युपचयौ.

त्यजन्। (२४) अतोऽसम्यक्परित्यागे हेतुमाह **न हि** इत्यादि **कार्यं** करणार्हं निर्दोषमिति यावत्। (२६) **कामात्** इच्छातो न कर्मणेति भावः। **तर्कयामास** संभावयामास। [**देवसंमितैः**] देव शब्देनोपचाराद्देवानां कर्मोच्यते। (२७) **नास्य किंचिदविज्ञातम्** इति सर्वज्ञत्वम् **नास्य किंचिदकर्मजम्** इति सर्वकर्तृत्वम् **न स किंचिन्न विषहेत्** इति सर्वत्र प्रतिपक्षनिराकरणक्षमत्वम्। (२८) **नैष्ठिकी** निष्पत्तिहेतुः। गुरौ इव [**गुरुवत्**] पृथिव्यादिभूतगुरौ [**भूतगुरवे**]। (३०) **इन्द्रप्रस्थं पार्थं ययौ** इत्यन्वयः। (३२) **भ्रात्रा** पितृष्वसृजेन। (३४) **क्षणिनं** सावसरं **कल्यं** सक्तं (?)।

## १३

(१) **जानतस्त्वेव ते सर्वं किंचिद्वक्ष्यामि भारत** इत्यादेः **तद्व्रजे**[३] **धर्मराजश्च राज्यपालनकीर्तिमान्** (अ० २२. ५८) इत्यन्तस्य भूभारहरणार्थं नरभावेनावतीर्णस्य ईश्वरस्य जरासंधवधः प्राकरणिकं प्रयोजनम्। तच्च युधिष्ठिरप्रेरिताभ्यां भीमार्जुनाभ्यां सिध्यति राजसूयकामस्य च युधिष्ठिरस्य तत्र साधने प्रवृत्तिर्नोपपद्यते। अन्यदिष्टमित्यन्यत्कर्मेति[४] व्याहतमिति न्यायात्। तस्मात्प्राकरणिकं जरासंधवधः राजसूयोपकारकतया युधिष्ठिरे प्रदर्श्यते तत्प्रेरिताभ्यां भीमार्जुनाभ्यां भगवान् कारितवानिति तात्पर्यार्थः। (२) **अवशेषितं** कतिपयतां नीतं **तस्मात्** कातिपयात् **अवरजं** अर्वाग्जातं। (३) **संकल्पः** कल्पना कुलैकदेशोऽपि कुलाधिकृत इति यावत्। **निदेशः** दैवाज्ञा ह स्फुटम्। (४) **ऐलस्य** सोमवंशस्य **इक्ष्वाकुवंशस्य** सूर्यवंशस्य अवरजमेव प्रकृतिं निदानं **परिचक्षते** इत्यन्वयः। **श्रेणिबद्धाः**[५] प्रधानभूताः। (५) एकेनाधिकं शतं **एकशतं** स कुलविस्तारः। (७) **मध्यमां** मध्यदेशलक्षणां जम्बूद्वीपलक्षणां च **मिथः** परस्परं **भेदेषु** समुदायेषु। (८) चतुर्भ्यो जातः **चतुर्जः**[६] द्वे मातरौ बृहद्रथो जरा राक्षसी च इति चत्वारः। चतुर्युः इति पाठे चतस्रो दिशो यौति मिश्रीकरोति एकाधिपत्येन। चतुर्यः इति

---

१ Om. in D2. २ Ed. कल्य; Cd seems to read कल्पं as well, with K V1 D. ३ MSS. न स ते for तद्व्रजे in D0. ४ D2 अन्यदिच्छाति अन्यत्करोतीति. ५ D2 reads श्रेणिबन्धाः. ६ Ed. चतुर्युः.

पाठे चतस्रो दिशो याति प्राप्नोति । ( ९ ) **तं** जरासंधमाश्रित्य **सेनापतिः** सन् **शिशुपालो राजा जातः** इत्यन्वयः । ( १६ ) **संनतिमान्** प्रणतिमान् । (१७) **पुरुषोत्तम** इति विरुद्धं मिथ्या ज्ञातो **विज्ञातः** । ( २० ) पृथिव्याश्चतुर्थभागं भजति **चतुर्थभाङ्**[1] । ( ५४ ) स्कन्धः [ **त्रिस्कन्धं** ] परिखा **योजनादधि** योजनादुपरि विक्रमक्रमेण तोरणो यस्यां [ **विक्रमक्रमतोरणम्**[2] ] **अष्टादशावरैः** अष्टादशावरणैः **नद्धां**[3] बद्धाम् । ( ५५ ) **व्रातानां** समुदायानां **त्रिशतावराः**[4] त्रिशतावरणाः । ( ५६ ) **शौरिसमो** विष्णुसमः । ( ६३ ) **आशास्य**[5] आशामुत्पाद्य अहमेतानधिकशतान् राज्ञो जयामि तदेतैरेव त्वा होष्यामीति । ( ६८ ) **एवं गते** एवं ज्ञाते ।

## १४

( १ ) **त्वद्** भवतः । ( २ ) **सम्राट्शब्दः** सम्राट्शब्दवाच्यः वाच्ये वाचकोपचारात् अथ वा सम्राट् इति शब्दो यस्य । ( ४ ) बहुभिः रत्नभूतैः पुरुषैः समाचिता [ **बहुरत्नसमाचिता** ] ( वयसोऽभ्यासस्य वृद्धसेवायाश्च ) **दूरं** बहुभागांशं **गत्वा** प्राप्य **श्रेयो** हितं । ( ५ ) **शमं** देहेन्द्रियादीनामात्यन्तिकी निवृत्तिः । **आरम्भे** उद्योगे सति **पारमेष्ठ्यं** परमेष्ठितादात्म्यम् । (८–९) **नीत्यर्थान्**[6] नीतिमुख्यान् येषु कृष्णभीमार्जुनेषु तान् अस्मान् **आत्मनो हितान्** बुध्यस्वेति शेषः । तानेव नीतिमुख्यानर्थान् दर्शयति **कृष्णे नयो** इत्यादिना । अथ वा नीत्यनपेतार्था नीत्यर्थाः तेषां विशेषणम् **आत्मनो हितान्** इति । **जयेत्** कर्मकत्वात् **रिपुं नीत्यर्थांश्च जयेदित्यन्वयः** । ( १० ) **अनुबन्धं** विपाकं यथा पश्चात् संबद्धम् अनर्थप्राप्तिमिति भावः । **न मृष्यन्ति** न सहन्ते । ( ११ ) **करान् हित्वा** अनादाय **यौवनाश्वो** मान्धाता । ( 171*[7] ) **एते** चकारग्रहणात् आद्यः साम्राज्यहेतवः समुदिताः सन्ति इति भावः । **अनुमृशन्** अभिभवन् । ( १२ ) एवमेव विना निमित्तं **निग्राह्यलक्षणं** निग्राह्यचिह्नं धर्मार्थनया

१ Ed. चतुर्थुः स; **Cd** with Ś1 Ñ1 V1 B D. २ **Cd** perhaps reads °तोरणाम्. ३ Ed. नद्धं; **Cd** with Ś1 K3. ४ Ed. त्रिशतावराः; **Cd** with Ñ1. ५ Ed. आराध्य. ६ Ed. नीत्यार्थान्; **Cd** with K B2 D2 D4. ७ **Cd** seems to read सर्वान्वंशाननुमृशन्नैते सन्ति युगे युगे with Ś1 K B3 D4 S.

एव लक्षणानि येषां तैः [ **धर्मार्थनयलक्षणैः** ] भवद्भिः । ( १५ ) **पुरुषतः** प्रकर्षेण । ( १६ ) **शतावरान्** शतावृत्तीन् । ( १७ ) **प्रोषितानां**[1] मन्त्रेण **प्रमृष्टानां**[2] रक्तानुलेपनमाल्यादिभिः । ( १८ ) कृष्णः पराजययुद्धे गुणान्दर्शयति **क्षत्रियः** इति । शस्त्रेण मरणं यस्य [ **शस्त्रमरणो** ] । स क्षत्रियो यो मृतोऽपि जेता भवति । परलोकजयेन **मागधं** जरासन्धं **प्रतिबाधेम** इति संभावनायां लिङ् । **यद्** यस्मात् **ननु** इति परस्परामन्त्रणे **स्म** भवामः । अत्र न सत्तामात्रं प्रतिपाद्यते प्रतिपन्नत्वादेव सत्तायाः किं च साम्राज्यसंपल्लक्षणधर्मान्तरपरिणता सत्ता बोधयितव्येति । ( १९ ) पदधर्मकाव्यं **क्रूरं** कर्म मारणमिति भावः ।

१५

( ३ ) जरासंधसेनासंयोगजन्मा यः **श्रमः** स एव युष्मांश्च **पराजयेत्**[3] । किमुत **विचेष्टितं** विक्रान्तम् । ( ४ ) **अर्थान्तरे** अर्थच्छिद्रे । ( ५ ) **संन्यासं** त्यागम् । ( ७ ) **अस्त्रं** दिव्यास्त्रं **वीर्यं** मनोबलं **पक्षो** वासुदेवः भूमिः इव **भूमिः** कुलम् परचित्तसमारूढा गुणाः **यशः बलं** कायिकम् । ( ८ ) विद्याः विद्यास्थानानि विन्दतेः अधीयतेर्वा **वैद्याः** । यद्यपि रसेन सदृशं गुणान्तरं नास्ति तथापि **वीर्यं** मनोबलमेव मह्यं **रोचते** । ( ९ ) कृतं संस्कृतम् अभ्यासादिना वीर्यं येषां तेषां कुलं [ **कृतवीर्यकुलम्** ] । निर्वीर्यलक्षणमाह **यस्य वृत्तिः पराजये** वृत्तिः प्राणधारणम् स **निर्वीर्यः** इत्यन्वयः । ( ११ ) **द्रव्यभूता** उपयोगिनः **गुणाः** बाहुबलसेनाबलादयः **पराक्रमे** वीर्ये मनोबले **सिद्धिः** मनोबलं सिद्धेर्जयकारणं **हेतुमाह कर्म दैवं च संश्रितम्** इति । वीर्यं सिद्धिः कर्म इत्येकार्थाः तथाहमेनं जेष्यामीति मानसं कर्म जयकारणम् । **हि** यस्मात् **दैवं** प्राक्कृतं कर्म **संश्रितं** प्राक्कृते[4] कर्मणि सहकारिणि सति तादृशं मानसबलं भवतीत्यभिप्रायः । ( १२ ) **प्रमादः** अनवधानं मनोबलाभावः तेन **नोपयुज्यते** न व्याप्रियते । **द्वारेण** छिद्रेण । ( १३ ) **अबलवति** प्रतिपक्ष्यपेक्षया न्यूनबले **दैन्यम्** आत्मन्यसमर्थबुद्धिः **यथा तथा बलान्विते मोहः** को मे किं करिष्यति इत्यनवधानम् । ( १५ ) **अनारम्भः** अनुद्यमः **अगुणनिश्चयो** वीर्य-

१ Ed. प्रोक्षितानां; **C**d with $K_{1.3}$ $V_1$ $D_2$ $G_{1.4.6}$. २ One **C**d MS. reads प्रसृष्टानां with $G_5$ M. ३ Ed. पराजय्यात्. ४ $D_2$ प्राक्तने.

गुणाभावनिश्चयो **गुणाद्** अनुकूलदैवात् मनोबलात्[1] **निःसंशयात्** फलं संशय-मन्यात् (?) **नैर्गुण्यं** गुणाभावः। (१६) काषायेण गैरिकादिना रक्तं **काषायं शमम्** उपशामम्।

## १६

(४) **परमः** उत्कृष्टः **क्रमः** पराक्रमः। **साम्ये** तुल्यत्वे **संशयः**। तदेव तत्तुल्यबलत्वं **द्वयोः** असंभवः केनापि प्रकारेणैकस्याधिक्याद्दुत्कर्षापकर्षयोः संभवात्। (५) **अन्तं** विनाशं शत्रोरिति शेषः। (६) **व्यूढानीकैः बल-वत्तरम्** इत्यन्वयः। **अनुबलः** हीनबलः। (७) **अनवद्याः** अच्छिद्राः **अ-संबुद्धाः** अज्ञाताः। (८) **एकः** श्रेष्ठः श्रेष्ठाश्रया लक्ष्मीरित्यर्थः। **अन्तरात्मा** प्रत्यक्पुरुषः **भूतानां** पृथिव्यादीनां **तत्क्षयं**[2] तस्य जरासंधस्य क्षयं **लक्ष्ये** संभावयामि। (१५) **अभिजनः** कुलम्। (१७) **नातिवर्तिष्ये** एका-नुरोधेन अन्यामिति शेषः। (२३) **यदृच्छोपतितं**[3] दैवागतम्। (२७) प्राक् **क्षुभितेन्द्रियः** स पश्चात् **ध्यानमगमत्**। (२८) **अवातं** न विद्यते पातयिता वातः यस्य इति। **अशुकादृष्टं** भावे क्तप्रत्ययः शुकदृष्टशून्य[4]-मित्यर्थः। (३१) समयेन हृदयस्थेन मन्त्रेण यथाप्रतिज्ञं नातिवर्तिष्ये इति समयम् अननुलङ्घ्य। (३४) **शरीरशकले** शरीरखण्डे। (३५) **स्फिक्** कटिभागः। (३७) **सुसंवीते** सुवेष्टिते **गर्भसंप्लवे** गर्भसंपाते। (३९) **सुखवहे** सुखमार्गे **संघातयामास** संघातं चक्रे। (४०) **समानीतमात्रे** योजितमात्रे **एकमूर्तिकृते** एका मूर्तिः कृता ययोः। (४१) वज्रवत् सारमयं [**वज्र-सारमयं**]। (४२) **संरम्भः** प्रयत्नः कोपो वा। (४६) **उपादातुम्** ईप्सितुम्। (४८) **धात्रीजनः** मातृजनः। (४९) **प्रस्रवैः** स्तनलक्षणैः। (५०) **अराक्षसीं** मानुषवेषधारणात्।

## १७

(193*) **पततो**[5] गच्छतः। (१४) **ज्वलिष्यति** दीपिष्यते।

---

१ $D_2$ न मोहो बलात्. २ Ed. तत्क्षये वै बलक्षयः; **C**d तत्क्षयं with $K_{2-4}$ $\tilde{N}_1$ $V_1$ $B_{1.2.5}$ $Dn_2$ $D_{4.5}$ and चैव लक्ष्ये with $B_{1.4}$ Dn $D_6$ Cnp. ३ Ed. यदृच्छया-गतं; **C**d with $Ś_1$ K $D_6$. ४ $D_2$ -दंश- (for -दृष्ट-). ५ **C**d seems to read पततो वैनतेयस्य गतिमन्ये यथा खगाः with $Ś_1$ K $B_{1.2.4}$ Dn $D_{1.2.4.6}$.

(१७) शुभा[1] इति धराया विशेषणं शुभं कल्याणम् । (२५) न विद्यते शस्त्रेण निधनं ययोः [ अशस्त्रनिधनौ ] ।

१८

(२) प्राणयुद्धेन बाहुयुद्धेन । (५) अयुध्य अवमानात् व्यायतत्वात् कृतश्रमत्वात् धर्षितः अभिभूतः आहूतो वा । (६) अलं समर्थः । समुदीर्णस्य वृद्धिंगतस्य । (७) [ हृदयं ] हृदयस्थोऽन्तरात्मा । प्रत्ययः सत्यमेव ब्रवीतीति धीः । (११) निदेशे आज्ञायाम् । (१२) मम कार्यं राजसूयः जगत्कार्यं भूभारहरणम् । (१४) कृष्णयोः वासुदेवार्जुनयोः । (१६) अन्धम् इव जडम् इव बलं नयानभिज्ञत्वात् । प्रणेतव्यं यथायोगं निवेशितव्यम् । (१७) धीवरा[2] मत्स्यवेधिनः जलम् इव अपयान्ति । धिया वरा धीमन्तो बलं नयन्ति[3] इत्यन्वयः । (२०) नयो नीतिः । जयः पराभवः । बलं मनोबलादि । विक्रमो युद्धायोद्यमः । (२२) स्नातकानां परिच्छदान् काषायवस्त्राणि । आच्छाद्य परिधाय । (२३) जात्यर्थं[4] बन्दीकृतक्षत्रियार्थम् । मुख्यवाससाम् उत्तमवस्त्रसंवीतानां रविसोमाग्निकान्तीनाम्[5] । (२४) हतं मेने युधिष्ठिर इति शेषः । (२५)[6] हितौ अनुकूलौ । सर्वकार्यप्रवर्तिनौ[7] सर्वस्य जगतः कार्यं भूभारहरणादि । कार्याणां शत्रुक्रियाणां तेषां विशेषणम् धर्मार्थकामकार्याणां धर्मार्थकामा एव कार्याणि प्रयोजनानि येषां । निग्रहे नाशने । एतदुक्तं भवति यथा शत्रुक्रियाणां धर्मार्थकामप्रयोजनानां नाशने हितौ तथा जगत्कार्यप्रवर्तनेऽपि । (२७) सदानीरां करतोयाम् । (२९) [ अच्युताः ] अच्युतपराक्रमादिति शेषः ।

१९

(७) गौतमक्षयं गौतमगृहम् । (१५) माषशब्देन द्वादशसंख्या लक्ष्यते [माषादं] । वितस्तै[स्ते]रङ्गुष्ठं मध्यमे तालः द्वादशतालप्रमाण इत्यर्थः । (१६) आनह्य वेष्टयित्वा । अवचूर्णिताः अवकीर्णाः । (१७) चैत्यं चैत्यनाम । (२०)

१ Ed. शुभाशुभं as one expression. २ Ed. धीवना ; Cd with $K_{3.4}$ $\tilde{N}_1$ $B_{1-5}$ Dn $D_{3-5}$. ३ Ed. नयन्ते. ४ Ed. ज्ञात्यर्थं ; Cd with $D_4$. ५ Ed. -वपुषां ; Cd by itself. ६ Ed. हि तौ. ७ Ed. सर्वकार्यप्रवर्तने ; Cd with $K_{2.3}$ $V_1$ B D $G_2$,

**समर्थयन्**[1] समर्थं कुर्वन् मन्त्रक्रियासामर्थ्यात् । **पर्यग्नि कुर्वन्** अग्नौ प्रतापि- [°सारि ]तायां हस्ताभ्यां नीराजयन् । ( २१ ) **स्नातकव्रतिनः** विद्या- स्नातकव्रतिनः । ( २२ ) **भक्ष्यमाल्यापणानां** ( 216* ) पण्यं **विपणिम्**[2] । ( २४ ) **विरागवसनाः** विचित्रवाससः । ( २५ ) **गोवासं** गवां संवासम् । एतावता निग्राह्यतामाह । **हैमवता** इति विशेषणं हिमवतः प्रसूतानां सिंहजाती- नामितरसिंहापेक्षया वैलक्षण्यम् । ( २७ ) **शालस्य** वृक्षविशेषस्य **स्कन्धान्** इव कायान् **उद्धतान् व्यूढोरस्कान्** निबिडवक्षसः । ( २८ ) **कक्ष्याः** द्वाराणि । ( ३४ ) **स्वस्त्यस्तु** इति आशीः **कुशलम्** इति आमन्त्रणम् । ( ४१ ) **किल्बि- षात्** द्रोहात् । ( ४२ ) **विलिङ्गस्य** स्नातकलिङ्गविरुद्धतस्करादिवर्तनम् । (४३) **अर्हणां** पूजाम् **अस्मदागम** अस्मदागमने । ( ४५ ) **अविशेषाः** साधारणाः । ( ४६ ) **विशेषवान्** क्षत्रियान्तरेभ्यः इति शेषः । ( ४७ ) **अप्रगल्भम्** अ- समर्थम् । ( ४९ ) **आजनयन्**[3] आभिमुख्येनात्मार्थम् अजनयन् जनितवन्तः ।

## २०

( २ ) **वैकृतं** विरोधः **विब्रूत** विस्पष्टं ब्रूत । ( ३ ) **प्रसृजति यः** अ- विद्यमानं दोषमिति शेषः । यः प्रसृजति सः **मनः समुपतप्यते** इत्यन्वयः । ( ४ ) **अत** इति करणोपन्यासः । **अन्यथा** विहितादिति शेषः । **वृजिनां** पापानाम् । ( ५ ) **क्षत्रधर्माद्धि प्रजानानाः** इति मौलिकः पाठः । **प्रजानन्यामिति** पाठे तु प्रजानन्निति मां ब्रूथेति शेषः । अथ च **प्रमादाद्** इदं सर्वं **जल्पथ** इत्यन्वयः । ( ७ ) **उपहृताः**[4] पशुवत्कल्पिताः । ( ९ ) **अस्मान्** रक्षणक्षमान् **तदेनः** कर्तॄ गच्छेत् । ( १० ) **समालम्भो** मारणाय प्रोक्षणम् । ( १२ ) **आर्तानुसारिणः** दीनानुकम्पिनः । **वयम्** इति बहुवचनमात्मनि गुरुत्वारोपणार्थम् । ( १४ ) **को हि जानन्नभिजनम्** इत्यनेन **रणे** समरे अभिजनज्ञानस्य स्वर्ग एव फलमित्याह । ( १५ ) **समास्थाय** चेतसि **एव** शब्दः फलान्तरनिवृत्तये । ( १६ ) **जयः** तु प्रासङ्गिकं फलमित्याह **स्वर्गयोनिः** इति । स्वर्गयोनिः योनिः यस्य इति मध्यम-

---

१ Ed. समर्चयन्; Cd with Ś1 K1-3. २ Cd seems to have read विपणिं रत्नवाससाम् with G2. ३ Ed नो वर्जितं ततः; Cd with K2. 4. ४ उपकृताः in D2.

पदलोपी समासः। **योनिः** कारणम्। अनेन युद्धेन स्वर्गो मे भूदित्याद्यभिसंधिना प्रवृत्तस्य प्रासङ्गिकं फलं जयोऽपि । **अव्यभिचारवान्** स्वर्गजययोरन्यतरेण फलेन फलवानेव इत्यर्थः । ( १७ ) **ऐन्द्रः** ऐन्द्रपदप्राप्तिहेतुत्वात् **वैजयन्तः** वैजयन्तस्य प्रासादप्राप्तिहेतुत्वात्। **समाहितः** आचरितः। ( १८ ) जयकामस्य युद्धमुपहसति **स्वर्गमास्थाय** इति । विग्रहिणो भावः **विग्रहित्वम्**। अथ वा विग्रहित्वम् असंभावित्वम् असद्ग्राहिता तस्योदाहरणं त्वं च। युद्धे मेवेत्याह **यथा तव** इति। **सैन्यैः** करणैः स्वबाहुबलेन [**बाहुल्यबल**] इति भावः। ( १९ ) **वीर्यं** मनोबलं **समं तेजः त्वया चैव नरे नास्ति** इत्यन्वयः । समं तुल्यबलं तेजो वीर्यम्। ( २० ) इदमेव तु विशेषकारणं भवतः यदमी राजानस्त्वया सममात्मनो वीर्यं न बुद्धवन्तः। **यावदेव न** बुद्धवन्तः **तावदेव** विजयिता **भवेत् तव**। **विषह्यं** विशेषेण बलाधिक्येन सह्यं सोढव्यम् **एतत्** तव वीर्यम्। ( २३ ) **मुमुक्षमाणा** मोक्षमिच्छन्तः **ब्राह्मणब्रुवाः** ब्राह्मणा वयम् इति ब्रुवन्तः। ( २४ ) **त्वाम् आह्वयामहे** स्पर्धामहे। ( २५ ) **पर्यवस्थाता** पुनरारोपयिता। ( २६ ) **धर्म्यं** धर्माय हितं हे देव **कृष्ण उपजीवनं** वर्तनमपि **एतत्**। ( २७ ) **देवतार्थम् उपाकृत्य** प्रोक्ष्य। ( ३२ ) **स्मृत्वा** अन्यदवश्यमिति त्रिकालज्ञत्वात्। ( ३३ ) **सत्यसंधः** सत्यपरिपालकः। ( ३४ ) तेन विधेरपि **सत्यं** पालयितुं **न** स्वयं **इयेष** इष्टवान्।

## २१

( ४ ) **अगदान्** औषधानि **निर्वृतीः वेदनानि च** ऋग्मन्त्रविशेषम्। अथ वा **निर्वृतीः**आह्लादकानि संज्ञालाभकरणानि। **मुख्यान्** जये प्रधानभूतान्। (५) **समनह्यत**[1] संनद्धोऽभूत्। ( ६ ) **समनुसृत्य**[2] बद्ध्वा। ( ११ ) **निग्रहावग्रहौ**[3] हत्वा पुनः पुनः **तथा** अन्यथाग्रहः । **संह्रादः** शब्दः । ( १३ ) **उपह्वरे** रहसि। ( १७ ) **प्रथमेऽहनि** प्रतिपदि **अनारमत्**[4] आरमन्तौ अविश्रान्तं तौ क्रीडन्तौ यत्र समवेतौ नियुधे तत् अनारमत् प्राणान्तिकमिति यावत् **अविश्रान्तं**

---

१ Ed. समनह्यत्. २ Ed. समनुसृज्य. ३ Ed. निग्रहप्रग्रहात्. ४ Ed. अनारतं.

खेदापनोदाय क्रियाविरामशून्यम् । (१८) तद्वृत्तं नु[१] अनारमणे विश्रान्ते वृत्तं व्यापारो यत्र तत् तथा । नु शब्दोऽवधारणे । त्रयोदश्याम् अन्यादृशं समवेतं प्रवृत्तमित्यर्थः ।

## २२

( २ ) अनुबोधितुं[२] निबोद्धुं नञा विधिर्वाच्यः । प्राणेन बलेन अथ वा जीवितेन बद्धुं[३] संयन्तुं रक्षणवाससा[३] कटिवस्त्रेण । ( ६ ) गुणशतं[४] शतवारम् । (४४) प्रीयमाणोऽभ्यभाषत[५] । ( ४१ ) अभिषिच्य[६] च तत्रैव जरासंधात्मजं तदा ।

## २३

पार्थः प्राप्य धनुःश्रेष्ठमक्षय्ये[७] च महेषुधी ( १ ) इत्यादेः प्रतीचीं[८] वासुदेवेन निर्जितां पुरुषर्षभ ( अ० २९. १९ ) इत्यन्तस्य स्वधर्मेणैवार्जितोऽर्थो धर्मसाधनं नान्यधर्मेण नाधर्मेणेति तात्पर्यार्थः । ( २ ) अस्त्रं दिव्यास्त्रं पक्षो मित्रपक्षो वासुदेवः भूमिः जन्मस्थानं कौरवकुलं यशः खाण्डवदाहेन प्रख्यापितं पौरुषं बलम् अस्त्रशिक्षाबलं च । ( ३ ) काम्यते इति कामं[९] राजसूयकामम् अहं मन्ये । ( १४ ) अनुसैनिकम् स्वसेनानुगामिनम् । ( १७ ) प्राग्ज्योतिषं कामरूपम् । ( २२ ) अनवरो[१०] हीनः ।

## २४

( ५ ) मृदङ्गः मर्दलकः स च तूर्योपलक्षणार्थः ।[११] ( १२ ) निवेशं कटकम् । ( १४ ) ध्वजिन्या सेनया । ( २२ ) फल्गु निष्फलम् । ( २७ ) निष्कुटः गृहारामः ।

---

१ Ed. तु. २ Ed. अनुरोधितुम्. ३ Ed. बद्धवङ्क्षणवाससा. ४ Ed. शतगुणं; Cd with $K_2$. ५ Read by $D_2$ only. ६ Ed. अभ्यषिञ्चत तत्रैव. ७ Ed. अक्षय्यौ; Cd with $B_3$ $D_2$. ८ Ed. विजिग्ये for प्रतीचीं and भरतर्षभः for पुरुषर्षभः; Cd with $Ś_1$ K $Ñ_1$ $V_1$ Dn $D_6$ for प्रतीचीं and $K_{1.2}$ $Ñ_1$ $V_1$ $B_5$ $D_{3.5}$ $G_{3.4}$ for पुरुषर्षभः. ९ Ed. कृत्यं. १० Ed. अनवमो. ११ Before this, the MSS. read नवा योद्धारः (also इदं बलकरौ चतुर्थोपलक्षणार्थः [?].

२६

**गण्डकीं** नदीं **विदेहां**[1] मिथिलां दश लक्षणानि जलदुर्गस्थानानि येषु तान् **दशार्णान्**। ( ६ ) **अधिसेनापतिं** सेनापतीनाम् अधिपतिम्। ( १६ ) [2]त्रिभिः अधिकाः दश **त्रिदशाः**।

२७

**( १५ ) दण्डं च दण्डधारं च विजित्य तरसा[3] रणे।**
**तैरेव सहितः सर्वैर्गिरिव्रजमुपाद्रवत्॥**
**( १६ ) जारासंधिं सान्त्वयित्वा करे च विनिवेश्य ह।**

२८

( १६ ) **अमित्रः** शत्रुः। ( १७ ) **पारजायिकः**[4] परजायां गतः। ( १८ ) **उपनीतः** आहितः। ( २१ ) सुष्ठु इष्टं कुर्वन्तीति स्विष्टकृतः तेषां प्रकृष्टः **स्विष्टकृत्तमः**। **कविः** वह्निः। ( २३ ) **अनभिग्राह्या** अनेतव्या[5] **छन्दतः** इच्छातः। ( ३८ ) **निजग्राह**[6] निगृहीतवान्। ( ५१ ) **कालकृतं** कालरूपेण ईश्वरेण कृतमित्यर्थः।

३०

( १ ) **रक्षणाद्धर्मराजस्य**[7] **सत्यस्य परिपालनात्** इत्यादेः **यस्य मे त्वं हृषीकेश यथेप्सितमुपस्थितः** ( २५ ) इत्यन्तस्य युधिष्ठिरस्य सम्यक्प्रजापालनजन्मा सत्येन प्रतिदिनमुपचीयमानः सजातीयानां पुण्यान्तराणां पर्थ्ययोर्[8]अर्थकामयोः प्रसवहेतुः स कोऽपि पुण्यराशिः येन चराचरगुरुर्यज्ञपुरुषो यज्ञोपकरणान्यादाय स्वयमधितिष्ठति राजसूयमिति तात्पर्यार्थः। ( २ ) **बलीनां** कराणां **निकामवर्षी** यथाकामवर्षी। ( ३ ) **राजकर्मणः** राजपुण्यात्। ( ४ ) **दस्युभ्यः** चौरेभ्यः **वञ्चकेभ्यः** खलेभ्यः **राजवल्लभतः** राजप्रसादपात्रेभ्यः।

---

१ Ed. विदेहान्. २ D2 om. from त्रिभिः up to विनिवेश्य ह in adhy. 27. ३ Ed. पृथिवीपतीन्. ४ Ed. पारदारिकः; Cd with Ś1 K B6 M D1, 2. ५ D2 अनियम्या. ६ D2 omits निज° ... °वान्. ७ D2 रक्षणार्थं धर्मराजस्य. ८ D2 reads विजातीयपथयोर्.

**दाम** मणीनाम् **आयोजनसुदर्शनान्** योजनावधि सुखदर्शनान् । ( २३ ) **असंबाधान्** असंकीर्णान् । समानि तुल्यानि द्वाराणि येषु [ **समद्वारान्** ] ।

## ३२

( १ ) **पितामहं गुरुं चैव प्रत्युद्गम्य युधिष्ठिरः** इत्यादेः **अशोभत सदो राजन्कौन्तेयस्य महात्मनः** ( १४ ) इत्यन्तस्य यज्ञार्थेषु व्यापारेषु योग्यतानुसारेण बन्धूनां नियोजनं तात्पर्यार्थः । ( २ ) **धनं मम प्रणयन्तु**[१] प्रकर्षेण नयन्तु स्वीकुर्वन्तु इति यावत् । **अपयन्त्रिताः**[२] अनिवारिताः । ( ६ ) **हिरण्यस्य** कपर्दस्य अथ वा **हिरण्यस्य** हेम्नः तस्य विशेषणं **सुवर्णस्य** इति शोभनो वर्णः वर्णकः यस्य । ( ७ ) **स्वामिवत्** स्वामिना तुल्याधिकारः । ( ८ ) **अर्हणानि** उपायनानि । ( ९ ) **समावृत्तः** वेष्टितः **पिप्रिच्छुः**[३] प्रीणयितुमिच्छुः युधिष्ठिरमिति शेषः । ( १० ) **सहस्रावरं** सहस्रानूनम् **अर्हणम्** इत्यस्य विशेषणम् । ( ९ ) फलमिति राज्यस्य इति शेषः सहस्रम् अर्हणानाम् । ( १२ ) **लोकराजा** नृपतयः । ( १४ ) **सदः** सभा । ( १५ ) **ऋद्ध्या च वरुणं देवं स्पर्धमानो युधिष्ठिरः** इत्यादेः **ततृपुः सर्ववर्णाश्च तस्मिन्यज्ञे मुदा युताः**[४] ( १८ ) इत्यन्तस्य यज्ञस्य सर्वाङ्गसंपूर्णता तात्पर्यार्थः । **षडग्निना** आरम्भणीयक्षत्रधृतिव्युष्टयतिरात्रदशसप्तपेयसभ्या इत्याख्या षडग्नयः । ( १६ ) मन्त्र(?)**रत्नोपहारकर्मण्यो** रत्नोपहारकर्मणि साधु । ( १७ ) **इडादि** स्विष्टम् ऊर्ध्वं कर्म तेनानुतृप्ताः ।

## ३३

( १ ) **ततोऽभिषेचनीयेन**[५] **ब्राह्मणा राजभिः सह** इत्यादेः **तुतोष नारदः पश्यन्धर्मराजस्य धीमतः** ( १० ) इत्यन्तस्य न्यूनाधिककरणशङ्कानिवृत्तिः तात्पर्यार्थः । **अभिषेचनीयेन** युधिष्ठिरेणेति शेषः । अथ वा अभिषेचनीयम् अभिषेचनं तेन हेतुना । **अन्तर्वेदीं** वेदीमध्यम् । ( ३ ) **कर्मान्तरं** कर्म-

---

१ Ed. प्रीणयन्तु ; Cd with N (except Ś1 K4) G3. २ Ed. अनियान्त्रिताः. ३ Ed. पिप्रीषुः; Cd is corrupt here. ४ Ed. मुदान्विताः ; Cd with K2.3 D4. ५ Ed. अभिषेचनीयेऽह्नि ; Cd with Ś1 K1–3 B5 D1, 2, 4.

विद्वम् । **उपासन्तो** त्वेषयन्तः **जज्वलुः**[1] ज्वलितवन्तः यथोक्ताः । छलजातिनिग्रह-स्थानसाधनोपालम्भो जल्पः ( Nyāyasūtra I. 2. 2 ) । (४) **वितण्डानाः** वितण्डां कुर्वाणाः इति शेषः । स प्रतिपक्षस्थापनाहीनो वितण्डा ( Nyāya-sūtra I. 2. 3 ) । (५) **कृशान्** अपुष्टान् **तत्र** तेषु विवादेषु । (६) **प्रपूरितं** समर्थितं **विचिक्षिपुः** क्षिप्तवन्तः । (११) **अथ चिन्तां समापेदे स मुनिर्मनुजाधिप** इत्यादेः **महाध्वरे महाबुद्धिस्तस्थौ स बहुमानतः** (२१) इत्यन्तस्य पुरा ब्रह्मलोकमिलितानां देवानां सदसि गुरुतरक्षत्रसंहारकारिणी परमेश्वरेच्छा प्रादुर्बभूव तस्य सहकारिकारणमिदं राजसूयः इति पूर्वापरानुसंधानान्नारदस्य विस्मयस्तात्पर्यार्थः । **चिन्तां** स्मृतिम् । (१४) **क्षत्रे** क्षत्रियकुले **जातः** उत्पन्नः । (१६) **शंभुं**[2] ब्रह्माणं **यदुक्षये** यदुगृहे । (१८) **नाम** स्फुटम् । (१९) **महत्** उन्नतं[3] परमार्थम् **आदास्यति** संहरिष्यति । (२१) **तस्थौ** तूष्णींभावेन । **बहुमानतः** कार्यस्य महत्त्वातिशयात् इति । देवगुह्यभङ्गादिति भावः । (२२) **ततो भीष्मोऽब्रवीद्राजन्धर्मपुत्रं**[4] **युधिष्ठिरम्** इत्यादेः **प्रतिजग्राह** [5]**तं कृष्णः शास्त्रदृष्टेन कर्मणा** (३१) इत्यन्तस्य भुवः कार्येण प्रत्यक्षतामुपगताय यज्ञपुरुषाय भगवान् भीष्ममुखेनार्घविधेरज्ञातज्ञापनं तात्पर्यार्थः । (२३) **संयुक्तं** विवाहेन । (२८) तेजः प्रभावातिशयः बलं पराभिभवशक्तिः पराक्रमः संग्रामोद्यमः [ **तेजोबलपराक्रमैः** ] । (३१) **शिशुपालस्तदा**[6] **पूजां वासुदेवे न चक्षमे**[7] इत्यादेः **स्वराष्ट्राणि गमिष्यामस्तदनुज्ञातुमर्हसि** (अ० ४२. ३७) इत्यन्तस्य अनेकजन्मपरंपरोचितेन द्वेषेण भगवत्येकाग्रतामुपगतस्य शिशुपालस्य मरणसमयेऽपि द्वेषवशाज्जनार्दनमेव स्मरतस्तत्सायुज्यप्राप्तिः तात्पर्यार्थः । (३२) **अवाक्षिपत्**[8] निन्दितवान् वृत्तानि चरित्राणि ।

## ३४

(३) **आपगेयः** भीष्मः । (७) **अनुवृत्तवान्** सेवाम् । (१०) **प्रिय-**

---

१ Ed. जजल्पुः ; **Cd** also seems to have read जजल्पुः as it explains जल्पः. २ Ed. शंभुः ; **Cd** with B2 only ! ३ D2 विभुभूतं for उन्नतं. ४ Ed. धर्मराजं. ५ Ed. तत् ; **Cd** with K B ( except B5 ) D1–3. 5. ६ Ed. तु तां ; **Cd** with D1. ७ चक्ष्महे for चक्षमे read by **Cd**, a corrupt form. ८ Ed. अपाक्षिपत् ; **Cd** with Ñ1 M. ९ One MS. reads निवृत्तवान्.

**काम्यया** प्रियेच्छया । ( १२ ) **सान्त्वनं** कोपप्रशमाय सामप्रयोगः । ( १४ ) **लक्षणम्** अर्घ्यतायाश्चिह्नम् । ( १५ ) **अकस्मात्** हेतुं विना **गतं** दिगन्तमिति शेषः । **राजानं** कंसम् । ( १६ ) **अपकृष्टा**[१] न्यूनीकृतविशेषा अनया क्रियेयेति[२] शेषः । **कृपणत्वं** दीनत्वं **निदिग्धम्**[३] उपचितम् । (१७) **तपस्विनः** अनुकम्प्याः **त्वया** माधवेन । ( १९ ) **निष्यन्दं** प्रवाहं **प्राशिता**[४] भक्षिता । ( २० ) प्रलम्भन्ते विसंवादयन्ति । ( २२ ) **दृष्टो युधिष्ठिर** इत्यस्य दृष्टस्तद्दोष[५] इत्यभिप्रायः ।

## ३५

( ६ ) **अनुनयः** प्रकुपितस्य प्रसादनम् । ( ८ ) **समितौ** सभायां । **सात्वतात्**[६] सात्वतेन पञ्चमी विभक्तिव्यत्ययात् । ( २२ ) **अप्ययः** प्रलयः । **कृष्णस्य** भक्तानां संसारकर्षकस्य[७] **कृते** कार्ये संसारलक्षणे महदादिपृथिवीपर्यन्ते **विश्वं सर्वं भूतम्** अन्तर्भूतं सामान्ये विशेषस्यान्तर्भावात् । ( २३ ) **प्रकृतिः** मूलकारणम् **अव्यक्ता** अदृश्या । ( २४ ) **बुद्धिः** अध्यवसायव्यापारा **मनः** संकल्पविकल्पकं **महान्** अहंकारः । ( 358* ) **मुखं** प्रधानम् । ( २७ ) **विचिनुयात्** कुर्यात् उत्कृष्टं फलाभिसंधिवर्जितं **यथा चेदिराडयम्** अधार्मिकः **तथा न पश्येत्** इत्यन्वयः । ( २९ ) **यथान्यायं** न्यायस्यानतिक्रमेण ।

## ३६

( ७ ) **आविध्यत्** भ्रामयामास हर्षादिति शेषः । ( ८ ) **सुनीथः** शिशुपालः ।

## ३७

( ६ ) **न**[८] **श्वा सिंहं हन्तुमर्हति** इत्यन्वयः । **शिवः** कल्याणः **सुनीतः** सुष्टुर्नीतिविषयीकृतः । ( ७ ) **भषेयुः** भवेयुः ( भुञ्जेयुः )(?) । ( ११ ) **समादातुं** संहर्तुं **पुनः**शब्दो हिरण्यकशिपुरावणावस्थायां तेजोग्रहणापेक्षया । ( १२ ) **विप्लुता** विपर्ययं गता ।

---

१ Ed. व्यपकृष्टा. २ D2 reads कृपयेति. ३ Ed. निविष्टं; D1 in the comm. reads निदग्धं. ४ Ed. प्राशितुं; **Cd** with Ś1 K4. ५ Do and D1 omit the passage from दृष्ट up to प्रायः. ६ Ed. सात्वतीपुत्रतेजसा; cf. K1 B1. 2. ७ संसारकर्मकरस्य read by Do. ८ **Cd** seems to have read मा भैनं as in Ś1 B2. 5 D3-5.

## ३८

(१) **न व्यपत्रपसे** आत्मनोऽपि न लज्जसे । (२) तृतीयाप्रकृतिः [ **तृतीयायां प्रकृतौ** ] षण्ढः । (४) **प्रच्यावितं** धैर्यादिति शेषः । (७) **शकुनिः** पूतना **अश्वः** केशी **वृषभः** अरिष्टः । (९) **वल्मीकमात्रः** वल्मीकप्रमाणः इति । (१०) **बह्वन्नं** भोजनं **परम्** उत्कृष्टं **वो** युष्माकं मतम् इति शेषः । **ते** वयं **शृण्वानाः** [1]**विस्मयं गताः** इत्यन्वयः । (१३) [2]**प्रतिश्रयः** स्थितिः । (१५) **भूयांसं** महान्तं **गोघ्नः**[3] अरिष्टवधात् **स्त्रीघ्नः** पूतनावधात् । (१६) **मतिमतां श्रेष्ठं**[4] इति संबोधनमुपालम्भः । **य एष** मानुषमात्रः **असौ जगतां**[5] **प्रभुः** इत्यन्वयः । (१७) गीयते इति **गाथा** प्रस्तुते धर्मोपदशं **गाथिनं** गाथापाठकं न **शास्ति** न शिक्षयति । अत्र हेतुः **प्रकृतिं यान्ति भूतानि** इति । प्रकृतिः स्वभावः । अयमर्थः । धर्मोपदेशो हि धर्मं ज्ञापयति न तु धर्मो गले गृहीत्वा पुरुषं प्रवर्तयति । ज्ञाते तु धर्मे धर्मप्रकृतिः प्रवर्तते निवर्तते च स्वैः प्रवर्तकैः । प्रकृतिरेव प्रवर्तका । तत्र दृष्टान्तो **भूलिङ्गशकुनिर्यथा** इति । भुवं लिङ्गति गच्छति भूलिङ्गो बिलशायी । स हि मा साहसमिति उपदेशमिमं सर्वान् श्रावयन्नपि कुम्भीकुलस्थलमांसमशित्वा जृम्भमाणस्य सिंहस्य दन्तान्तरवृत्ति मांसमादत्ते एवं भवानपि धर्ममुपदिशन्नपीदृशमधर्मं करोति । पापस्वभावविजृम्भितमिदम् । (१८) प्रदर्शयति इति **प्रदर्शकः** उपदेशकः । (१९) **धर्मवाक्** धर्मवादी **अवप्लुतः** च्युतः । (२०) **धर्मिणं** धर्मवन्तम् । (२१) **अन्यकामा** अन्यस्मिन् पार्थिवे शाल्वे कामो यस्याः । **भद्रं ते कथम्** इत्यन्वयः । (२२) **नैषितवान्**[6] उद्वोढुं नेष्टवान् । (२३) **यस्य** विचित्रवीर्यस्य **दारयोः** भार्ययोः **मिषतः** उन्मेषतः पश्यत इति यावत् अनादरे षष्ठी त्वामनादृत्येत्यर्थः । (२५) **धर्मज्ञ** इत्युपालभते **उपचयम्** आधिक्यं **क्वचित्** ज्ञाने । (२७)

---

१ Cd seems to have read परं वो विस्मयं गताः for परं विस्मयमागताः of Ed. २ Cd seems to have read यत्र च स्यात्प्रतिश्रय for यश्च स्याच्छरणागतः of Ed. ३ MSS. add आरिष्टघ्नः after गोघ्नः. ४ Ed. श्रेष्ठो ; Cd with Ś1 K2. 3 B3 Dn1 D6 T1 M. ५ Ed. जगतः; ६ Ed. नैषिनवान् ; Cd with B1 G3-5. ७ Omitted in D2.

**मोघं** निष्फलम्। (३०) **अन्यथावृत्तः** अधर्मचरित्रः। (३२) **भक्तम्**[1] आहारम् **अण्डजाः** पक्षिणः। (४०) **अन्तरात्मनि** ईश्वरे [2]**विनि(अभि)-हते** मोहच्छन्ने **रौषि** कृष्णोऽयमन्तरात्मा कृष्णोऽयमीश्वर इति वदसि यद्। **पत्र-रथः** पक्षी। भीष्मे हंसत्वमारोप्यैवं ब्रूते हंसस्याण्डभक्षणं भीष्मस्याशुचिकर्मण्या-रोपयति **अण्डभक्षण**मिति। **वाचम् अतिक्रम्य**[3] **ईयते** वर्तते इत्यर्थः।

## ३९

(३) **छद्मना** छलेन **ब्रह्मवादिना** ब्राह्मणोऽहमिति वदता। (४) **आत्मानं** स्वभावं **ब्राह्मणस्य**[4] ब्राह्मणसंबन्धिनम्। अथ वा अत्र चान्वयाभिधा-नस्य व्यतिरेके तात्पर्यं तेन कृत्स्नस्य ब्राह्मणस्य स्वभावव्यतिरेकं पश्यन्ति। **पाद्यं दातुं नैवेष्टम्**। **ब्राह्मण्यमभिजानते**ति पाठे ब्राह्मण्यमात्मानमिति सामानाधि-करण्यपदे **आत्मानं** स्वभाव**मभिजानता** कृष्णे वाचनिकं पश्यति इति यावत्। अत एव **दुरात्मन** इत्युक्तम्।

योऽन्यं सन्तमात्मानमन्यथा ह्यनुभाषते।
किं तेन न कृतं पापं चौरेणात्मापहारिणा[5]। ( =var.1.68.26.)

इति स्मृतेः। (५) **भुज्यतामिति तेनोक्ताः** सुहृद्भावेनेति शेषः। **विकृतं** विरोधि-नः कृतं कार्यं **कृतं** कृष्णेन इति उपालम्भः। (६) **सम्यग्** वास्तवम् **अव-गच्छति** लभते इच्छावशात् इति शेषः। (७) **अपकृष्टाः** प्रच्याविताः। (८) **स्त्रीसधर्मा** षण्ढः **वृद्धः** विकलेन्द्रियः **प्रदर्शकः** उपदेष्टा। (९) **रूक्षम्** अर्थतः **रूक्षाक्षरं** शब्दात्। (१३) **महासेनः** कार्त्तिकेयः।

## ४०

(५) **मृत्युः** स्यात्कौशिकालिङ्गशरीरयोर्विश्लेषः। **कालः** यमः। (१३)

१ Ed. भक्ष्यम्, **C**d with $Ś_1$ $K_{1.2}$ $B_1$ $D_4$. २ Ed. विनिहते. ३ Ed. वाच-मतिशयते; **C**d वाचमतीयते with $K_4$ $\tilde{N}_1$ $B_{1.4.6}$ **D**n $D_6$ **M** **C**n. ४ Ed. ब्रह्मण्यम्; **C**d ब्राह्मणस्य with $Ś_1$ $D_4$ and ब्राह्मण्यम् with $K_2$ $\tilde{N}_1$ $V_1$ $B_{1-3}$ $D_{3.6}$ $T_1$ $G_{1-3}$. ५ Cf. Manu. 4. 255 :

योऽन्यथा सन्तमात्मानमन्यथा सत्सु भाषते।
स पापकृत्तमो लोके स्तेन आत्मापहारकः॥

**निदर्शनं** लिङ्गम् । (१५) **कुशलं** धनक्षेत्रादिसमृद्धिम् **अनामयम्** अरोगताम् । ( २२ ) **वधार्हाणां** वधहेतूनां । ( २३ ) **आह्वयते** स्पर्धते ।

४१

( १ ) **कृष्णंस्यैष**[1] **विनिश्चयः** इति कृष्णप्रेरितो ब्रवीतीत्यर्थः । ( २ ) **दैवपरीतात्मा** दैवव्यापृतात्मा । ( ८ ) **यजमानेन**[2] इति यागशीलताप्रतिपादनार्थं **दारिता** भयं लम्भिता भयलम्भनं शौर्यप्रतिपादनार्थम् । ( 392* ) चकारः स्तुहीति क्रियामनुवर्तयति यत्तदोर्नित्यसंबन्धात् **येन विजितस्तं स्तुही**त्यन्वयः । ( ११ ) **अशेषां** न विद्यते शेषो यस्याम् । ( १७ ) **भोजस्य** कंसस्य **पुरुषे** पुरुषाकृतिमात्रे **वर्गपाले** गोसंघपाले । ( १९ ) अर्थो विगर्हितो यासाम् [ **अर्थविगर्हिताः** ] क्रियते इति शेषः । ( २१ ) **मांसाकुलं**[3] **दन्तान्तरविलग्नं** अधिकं मांसम् । ( २५ ) **इच्छतः**[4] **किल** इत्युपहासे । ( २८ ) **कटाग्निना** कक्षाग्निना ।

४२

( ३ ) **न हितो** अहित इत्यर्थः । ( १० ) **सौवीरात्**[5] **प्रतिपत्तौ च बभ्रोरेष तपस्विनः**[6] । **भार्यामभ्यहरन्मोहादकामां तामितो गताम्** इति । अस्यार्थः । **इतः** इन्द्रप्रस्थात् **तां** भद्रां नाम्ना **अकामां** करूष **एष** शिशुपालोऽभ्यहरत् । **प्रतिपत्तौ** दाने क्रियमाणे सति **बभ्रोर्या** देवस्य भार्या वाग्दत्तत्वात् **तपस्विनः** स्वधर्मनिष्ठस्य । अस्यैव विवरणम् ( ११ ) **एष मायाप्रतिच्छन्नः** । ( १८ ) **मत्पूर्वाम्** अहं पूर्वपतिः यस्याः । ( १९ ) **मन्यमानो** जानन् **परिकीर्तयेत्** ख्यापयेत् । ( २० ) **श्रद्धा** इच्छा । ( ३० ) **सत्कारेण** वस्त्रानुलेपनपुष्पादिपूजया । ( ३८ ) **श्रुत्वा तु वचनं राज्ञां धर्मराजो युधिष्ठिरः** इत्यादेः **तस्यां सभायां दिव्यायामूषतुस्तौ नरर्षभौ** ( ६० ) इत्यन्तस्य राजानुव्रजनेन

---

१ Ed. कृष्णस्यैव. २ Ed. जायमानेन ; **Cd** with $K_2$ $D_{2m}$ **C**np. ३ Ed. मांसार्गलं ; **Cd** with $D_{1\ 2}$. ४ Ed. इच्छतां. ५ Ed. सौवीरान् ; **Cd** with $D_{3.\ 5}$. ६ Ed. यशस्विनः ; **Cd** with $Ś_1$ $K_{1–3}$ $Ñ_1$ $B_2$ Dn $D_{4,\ 6}$.

शिष्टाचारप्रतिपालनं तात्पर्यार्थः । ( ५२ ) **सभाजयत** प्रीणितवान् । ( ५७ ) **संगृह्य** निरुध्य । ( ५८ ) **त्वा** त्वाम् । ( ५९ ) **संविदं** समयम् । ( Colophon ) **शिशुपालवधः** ।

## ४३

( १ ) **वसन्दुर्योधनस्तस्यां सभायां पुरुषर्षभ**[1] इत्यादेः **उभयोः पक्षयोर्युक्तं वक्ष्यत्यर्थविनिश्चयम्**[2] ( अ० ४५. ४२ ) इत्यन्तस्य प्राक्तनपुण्यसहकारिणा पौरुषेण समृद्धां पाण्डवश्रियमुपलभ्य नक्तंदिनमीर्ष्याशल्यविनुद्यमानमर्मणो दुर्योधनस्य तदयःशल्यमुद्धर्तुं परमेश्वरो राजसूयविपाकाभ्यां प्रेरितेन तमोमयेन शकुनिना लक्ष्मीसमुद्धाटनसिद्धमन्त्रायमाणस्य द्यूतस्य लक्ष्मीसाधनतया संभावनं तात्पर्यार्थः । ( २ ) **अभिप्रायान्** अभिप्रायपूर्वकान् आकारविशेषान् **नागसाह्वये** नागेन हस्तिना समानः आह्वयः संज्ञा यस्य । ( ३ ) **तलं** भूतलम् । ( ४ ) **दुर्मना** दुःखितमनाः **विमुखः** विद्वेषी । ( ८ ) **आकारं** लज्जाद्यनुभावम् । ( ११ ) **प्रलम्भानि**[3] वञ्चनानि । (१६) **अनेकाग्रः** विक्षिप्तचित्तः । (१८) **कुतो** हेतोः **मूलं** स्वस्थानम् । ( २१ ) शुचिशुक्रौ आषाढज्येष्ठौ तयोः आगमे [ **शुचिशुक्रागमे** ] ग्रीष्मर्तौ । ( २२ ) **पदानुगः** प्रतिकारकारकः । ( २४ ) **तथायुक्तं** तथानुचितम् । ( २९ ) **सोऽहं न स्त्री न चाप्यस्त्री न पुमान्नापुमानपि** इत्यस्यार्थः । **सोऽहं** समृद्धशत्रुश्रीसोढा **न स्त्री** अपि सपत्नी श्रियं न सहते । अस्त्री तर्हि स्यामित्याह **न चाप्यस्त्री** इति । द्वौ निषेधौ प्रकृतमर्थं गमयतः इति न्यायात् । स्त्र्येव अबलत्वात् । **न पुमान्** समृद्धशत्रुश्रीसहत्वादेव हेतोः । तर्हि अपुमानेव स्यामित्यतः आह **अपुमानपि** अपि तु पुमानेव पुरुषचिह्नाङ्कितलाञ्छितत्वात् । ( ३१ ) एवम् **एव** यथा पाण्डवैराहृता लक्ष्मीस्तथाहम् **आहर्तुम्** अशक्तः तेनैवोपायेन अस्यैवोपायस्याभावात् । ( ३२ ) **शुभ्रां** दीप्तिमतीम् ।

## ४५

( ४ ) **विवर्णः** निजवर्णात् च्युतः **हरिणः** पाण्डुः **दीनः** क्षीणाहंकारः ।

१ Ed. भरतर्षभ; Cd with K B1 m Dn D2. 5. 6. २ रक्षत्य° for वक्ष्यत्य° in D1. 2, ३ Ed. प्रलम्भान्.

( ६ ) **कुतोमूलं** किंमूलं प्रथमान्तं किमस्तसिल्विधानात् । अथ वा **आर्तो** मूलं कारणम् इत्यार्तिकारणप्रश्नः द्यूतक्रीडायाम् । ( ९ ) **आजानेयाः** साधुवाहिनोऽश्वाः । ( १० ) **विहाराः** क्रीडास्थानानि । ( ११ ) **वाचि बद्धं** वाङ्मात्रसाध्यम् । ( १३ ) **अमर्षणः** असहनः **स्वाः प्रकृतीः** स्वीयाः प्रजाः **अभिभूय** आक्रम्य **परे** शत्रौ **स्थिताः** वर्तमानाः **क्लेशात्**[1] दुःखात् **परजात्**[2] शत्रुभवात् **मुमुक्षुः** आत्मानं मोक्तुमिच्छन् **वै** प्रसिद्धम् । ( १४ ) **संतोषः** प्रासादन्यत्रालंबुद्धिः **अभिमानः** गर्वः स च परापेक्षया स्वस्मिन्गुणोत्कर्षदृष्टिरूपः **अनुक्रोशः** परदुःखप्रहाणेच्छा **भयम्** उच्छेददृष्टिः **महत्** पदमिति शेषः । ( १६ ) **ऋध्यतो** वर्धमानान् **अदृश्यान्**[3] असतः **स्थितानिव**[4] विद्यमानानिव **उद्यतान्**[5] ऊर्जितान् । ( १९ ) **कदलीमृगमोकानि** कदलीनां मृगस्तस्य मोकान्यजिनानि तेषां विशेषणं **कृष्णश्यामारुणानि** इति **पराध्यान्** उत्कृष्टान् संख्याविशेषावच्छिन्नान् वा । ( २० ) **उष्ट्रवामीनां** वेगवदुष्ट्रीयुग्मानां **शतानि त्रिंशतं** त्रीणि सहस्राणि । ( २३ ) **शर्म** सुखम् । ( २४ ) **वाटधानाः** वास्तव्याः **गोमन्तः** गोस्वामिनः **त्रिखर्वं**[6] त्रीणि खर्वाणि प्रमाणं यस्य । ( २६ ) **मधु** अमृतं **धारयन्ति** बिभ्रति **कांस्यं** पानीयपात्रं **वारुणं** वरुणसंबन्धि **कलशोदधिः** समुद्रः । (२७) **शैक्यम्** अरत्नविरचितो भाण्डाधारः **ज्वरभूतं**[7] संतापदायित्वात् । ( २८ ) **तत्** शैक्यारोपितं पानीयपात्रं **गृहीत्वा** पूर्वादिसमुद्रत्रयं गच्छन्ति उत्तरं न गच्छन्ति अगम्यत्वात् । ( २९ ) **पतत्रि**शब्देन खेचरा उपलक्ष्यन्ते । ( ३० ) **परिविष्यतां** भोज्यमानानां **संज्ञा** संकेतः । ( ३२ ) **उपस्थानं** यज्ञवाटः पुण्यः वाटः । ( ३९ ) **अपदान्तरम्** अविलम्बम् । ( ४३ ) **निवर्तयिष्यति त्वासौ यदि क्षत्ता समेष्यति** इत्यादेः **तेनाहमेवं कृशतां गतश्च विवर्णतां चैव सशोकतां च** ( अ० ४९. २५ ) इत्यन्तस्य दुर्योधनेर्ष्याकारणानां बाहुल्यं तीव्रत्वं च तात्प-

१ Ed. क्लेशान्. २ Ed. परजान्. ३ Ed. अदृश्याम्. ४ Ed. स्थिताम्. ५ Ed. उद्यताम्. ६ Ed. त्रैखर्व; **Cd** with $K_{1.4}$ $V_1$ $B_{1.2\ 4-6}$ Dn $D_{1.3.4}$ ७ Ed. ज्वररूपं; **Cd** with $K_{1.2-4}$ $D_6$. ८ After this $D_2$ reads: नेत्र गौडदेशे प्रसिद्धं तेन नाम्ना भाषया स्त्रीपरिधानयोग्यं विचित्रं पट्टवस्त्रं न तत्र निहितान्कम्बलानित्यर्थः । वासः परनेत्रमिति श्रीहर्षेणोदाहृतम् ।

यर्थिः । ( ४७ ) **तक्ष्णा** वर्धकिः । ( ५४ ) **दिष्टं** दैवम् । ( ५८ ) **आपगेयं** भीष्मम् ।

४६

( २ ) **सभास्ताराः** सभासदः । ( १२ ) **भेदो** विघटना । ( ३ ) **अमर्षः** असहिष्णुता । ( १९ ) **साधारणा** विशेषरहिता । ( २० ) **स्थिरः** दृढः येन न स्फुटामि । ( २१ ) **निघ्नाः** आयत्ताः **चैत्रकादयो**[2] नृपाः । ( २२ ) **पर्युदस्ताः** दूरक्षिप्ताः । ( २४ ) **अर्घहारिणां** मूल्यवतां समर्थाभूत् । ( २५ ) **प्रातिष्ठन्त** प्रत्यावृत्य गताः । ( २६ ) **बैन्दुसरैः**[3] बिन्दुसरःसमुद्भवैः रत्नैर्वर्जितत्वादेवं[1] रत्नविशेषानभिज्ञा इत्यभिप्रायः । ( ३२ ) **प्रलम्भं** वञ्चनम् । ( ३५ ) **पुरस्तात्** पूर्वम् ।

४७

( २ ) **फलतः** फलिकं वस्त्रादि **भूमितः** आकारजं[4] हीरादि । ( ३ ) **ऊर्णान्**[5] मेषरोमजान् **बैलान्**[6] बिलवासिमूषिकादिरोमजान् **पार्षदंशान्** बिडालरोमजान् **जातरूपपरिष्कृतान्** सुवर्णरचनालंकृतान् **मुख्यान्** श्रेष्ठान् । ( ४ ) **तित्तिरिकल्माषान्** तित्तिरिवत् चित्रान् **शुकनासिकान्**[7] बभ्रुमुखान् । ( ५ ) **गोवासना** गोस्वामिनः **दाशमीयाः**[8] दशमदेशोद्भवाः **त्रिखर्वं** त्रीणि खर्वाणि प्रमाणमस्य । ( ६ ) **कमण्डलून्** चाकरे कमण्डलवः कटकाः । ( ७ ) **कार्पासिकः** देशः । ( ९ ) इन्द्रजनितवर्षसंभवैः **इन्द्रकृष्टैः** **नदीमुखैः** नदीपात्रैः । ( १५ ) **औष्णीषान्** मुकुटधारिणः **अवासान्**[9] नग्नान् । ( २१ ) **शतपातिनः** शतयोजनगामिनः[10] । ( २४ ) **आपरान्तः**[11] पश्चिमदेशः । ( २९ ) **वैयाघ्रपरिवारणान्** व्याघ्रचर्मावृतान् । ( ३० ) **परिस्तोमान्** कम्बलान् ।

---

१ Ed. रत्नैस्तामक्षानावाप्य ; **Cd** रत्नैस्तक्ष्णोवाप्य. २ Ed. चैत्राकि. ३ Ed. बिन्दुसरो. ४ This is obviously a mistake for आकरजं (produced from mines). ५ Ed. पैडान् ; **Cd** with D2.4. ६ Ed. चैलान् ; **Cd** with Ś1 Ñ1 V1 B1.2 Dn D2.6. ७ **Cd** in D1.2 seems to read शुक्रनासिकान्. ८ Ed. दासर्माया. ९ Ed. अनिवासान्. १० After this D2 reads : मानुषीदुग्धजीविनः तद्देशे प्रसिद्धात् शिरस्त्रधारिणः । ११ Ed. अपरान्तः.

## ४८

( २ ) **कीचकः** सरन्ध्रवंशः **वेणवः** कण्टकिनो वंशाः । ( ५ ) **ललामान्** उत्कृष्टान् । ( ६ ) किं बहु वक्तव्यमचेतनैः **अम्बुभिः** अपि नदीभावापन्नैः **उत्तरेभ्यः कुरुभ्यः माल्यं व्यूढम्**[१] । ( ८ ) **वारिषेणः** नाम समुद्रविशेषः **लोहित्यः** नदविशेषः । ( ९ ) **कालीयकस्य** कृष्णागुरुणः । ( १० ) **रमणीयार्थम्**[२] इत्यर्थः । (१७) **दुकूलं** दीर्घतरं पट्टवस्त्रं **पत्रोर्णं** धौतकौशेयम् । ( १८ ) **कृतकालाः**[३] कृतप्रस्तावाः **सुबलयः** शोभनोपहाराः । ( १९ ) ईषा च दन्ताः येषां [ **ईषादन्ताः**[४] ] **हेमकक्षाः**[५] सुवर्णं च रत्नानि **पद्मवर्णाः**[६] सिताः **कुथावृताः**[७] चित्रकम्बलवेष्टिताः । ( ३३ ) आदिजाः ब्राह्मणाः मध्यजाः क्षत्रियाः वैश्याः अन्त्यजाः शूद्राः [ **आदिमध्यान्तजाः** ] **पर्यस्तः** क्षिप्तः प्रततत्वात् । ( ३७ ) **प्रमीयमानं**[८] संपाद्यमानम् **आरब्धं** सेनाभावेन निर्मितम् ।

## ४९

( २ ) **ह्रीनिषेधाः** ह्रीरेव पापकर्मप्रवृत्तौ निषेधो येषाम् । ( ३ ) **कांस्यदोहनाः** उपलकलशाभदोहनाः आरण्याः इव **आरण्याः** पुष्टाः । ( ६ ) **सुनीथः** शिशुपालः **अनुकर्षं** रज्जुम् । ( ८ ) **अक्षान्** युगानि । ( १५ ) **कश्मलः** मोहः । ( १७ ) **प्राणदन्** नादं कृतवन्तः । ( २० ) **अनडुहां** वृषाणाम् । ( २१ ) **शम्बरहन्ता** कामः । **यौवनाश्वो** मान्धाता । ( २४ ) **युगं** वस्त्रयुगं **नद्धं** स्यूतम् ।

## ५०

( १ ) **त्वं वै ज्येष्ठो ज्यैष्ठिनेयः पुत्र मा पाण्डवान्द्विषः** इत्यादेः **क्रीडन्स्त्रीभिर्निरातङ्कः**[९] **प्रशाम्य भरतर्षभ** ( ९ ) इत्यन्तस्य तैस्तैः पुरुषगुणै-र्युधिष्ठिरो नये शमर्हतीति तात्पर्यार्थः । **ज्यैष्ठिनेयः** ज्येष्ठायाः अपत्यं **द्वेष्टा हि**

१ Ed. चाप्यपोढं; **Cd** चापि व्यूढं. २ Ed. रमणीयार्थान्; **Cd** with K1 2 B1 D2 G1. 3. 6 M1. ३ Ed. कृतकाराः; **Cd** with K4 B1. 2 m. 4. 6 Dn D1 2. 6. ४ Ed. ईषादन्तान्. ५ Do in the comm. seems to read हतकक्षान्. ६ Ed. पद्मवर्णान्. ७ Ed. कुथावृतान्. ८ Ed. प्रमीयमाणं. ९ Ed. निरातङ्कः.

भवसि **असुखं** दुःखमादातुं **यथा** असुखं **तथा निधनम्** अपीत्यर्थः । ( ३ ) **अव्युत्पन्नम्** अशिक्षितम् **अनर्थानां**[१] परद्रोहादीनां **तुल्योमित्रं**[२] तेन मित्रेण च तुल्योऽमित्रो यस्य । ( ४ ) **सप्ततन्तुं महाध्वरम्** इति पर्यायाभ्यामिति यज्ञस्योत्कर्षातिशयमाह ( ५ ) **अभ्यर्हणानि**[३] अभ्यर्चनानि । ( ७ ) **अव्यापारो** न विद्यते स्पृहालक्षणो व्यापारो यस्य । **युक्तः**[४] उद्युक्तः । ( ८ ) **अव्यथः** अदुःखी **दक्षो** अनलसः **उत्थानवान्** उद्योगवान् । ( Colophon ) इति धृतराष्ट्रवाक्यम् । ( १० ) **जानन्वै मोहयसि मां नावि नौरिव संयतान्**[५] इत्यादेः **वर्धन्ते पाण्डवा नित्यं वयं तु स्थिरवृत्तयः**[६] ( २८ ) इत्यन्तस्य दुर्योधनमोहोद्भवस्य ईर्ष्यादिरधर्म एव धर्म इति तात्पर्यार्थः । **नावि संयतान्** समुपविष्टान् नौर्यथा[७]-बलं वीचितरुचलनत्वमुत्पादयति तथा त्वं **मोहयसी**त्यन्वयः । ( ११ ) **भविष्यं** दैवाधीनम् **अर्थं** पुरुषार्थं **कृत्यं** पुरुषकृतिविषयम् **आख्यासि** तदनेन पौरुषं त्यक्तमेव त्वयेत्यभिप्रायः । ( १२ ) **परप्रणेयः** परायत्तः **पदानुगाः** अनुचराः । ( १३ ) परिणतिः प्रज्ञायाः तत्त्वार्थादचलनम् [ **परिणतिप्रज्ञो**[८] ] । ( १६ ) **प्रकालयेत्** प्रक्षोभयेत् **दिशः** दिशि स्थितान् **प्रत्यमित्रश्रियं** अमित्रश्रीकृते **प्रतोदेन** प्रज्ञानेन **बुभूषुः** विवृत्तुमिच्छुः । ( १७ ) **योगैः**[९] उपायैः । ( १९ ) **समत्वं**[१०] तुल्यत्वम् **ऐश्वर्यम्** अविलङ्घनीयाज्ञा समाहिता । ( २१ ) **अप्रवासिनम्** आश्रमान्तरम् अगच्छन्तम् । ( २२ ) **जातितः** स्वभावतः । ( २४ ) **अन्तिकात्** संनिधानात् । ( २५ ) अजमीढकुले जात **आजमीढ** संबोधनमिदम् । **ते** तुभ्यं **मा रोचिष्ट** रुचिविषयतां मा गच्छतु । **एष नयः भारः** वोढव्यत्वात् **विष्ठितः**[११] विशेषेण स्थितः **शिरसि** वोढव्यः । ( २६ ) **जन्मवृद्धिं** संतानवृद्धिं **विक्रमः** पराक्रमः **अर्थानां सद्योवृद्धिः** इत्यन्वयः । ( २७ ) **अप्राप्य संशयो न**

---

१ Ed. समानार्थं; **Cd** with K1. २ Ed. तुल्यमित्रं; **Cd** with K4 D3. Ed. wrongly takes **Cd** to give the reading as in the text. ३ Ed. आभरणानि; **Cd** with Ś1 G1 M1. ४ Ed. नित्योद्योगः, with **Cd**, cf. K4, नित्यं युक्त-. ५ Ed. संयता; **Cd** with K2 D2. 6. ६ Ed. स्थिरबुद्धयः; **Cd** with B1. 6 m D1. 2. 5. ७ D2 reads: नौर्यथा चलन्ती तीरतरुचलनभ्रममुत्पादयति। ८ Ed. परिगतप्रज्ञो; **Cd** with K1. 3 V1 B1. 2. 4–6 D ( except D1. 2 ). ९ Ed. योगो. १० Ed. समत्वं. ११ Ed. भिष्ठितः; **Cd** with K2 D2.

**भविष्यति** इत्यन्वयः । ( २८ ) **अतादृशस्य** अतत्सदृशस्य स्थिरा वृद्धिविरहिणी वृत्तिः येषाम् [ **स्थिरवृत्तयः**[1] ] ।

## ५१

( १ ) **यां च मे**[2] **तां श्रियं दृष्ट्वा पाण्डुपुत्रे युधिष्ठिरे** इत्यादेः **यावदेव भवेत्कल्पस्तावच्छ्रेयः समाचरेत्** ( ९ ) इत्यन्तस्य युधिष्ठिरलक्ष्मीहरणे द्यूतात्परमुपायं न पश्यामि श्रेयांसि बहुविघ्नानि यावद्विघ्ना न पतन्ति तावदेव द्यूतमारभ्यतामिति तात्पर्यार्थः । ( ३ ) **ग्लहान्** पणान् **अस्फुरम्**[3] । ( ८ ) **कटवत्** । ( ९ ) **कल्पो** निर्व्याधिः । ( १० ) **सर्वथा पुत्र बलिभिर्विग्रहं तैर्न**[4] **रोचते** इत्यादेः **इमे**[5] **क्षिण्वन्त्वसवः सायकाश्च** ( ११ ) इत्यन्तस्य अनर्थसाधनेऽर्थसाधनधीस्तव भ्रान्तिरिति तात्पर्यार्थः । **विकारः** विरुद्धक्रिया **अनायसम्** अलौहम् । ( ११ ) **संग्रन्थनं** गुम्फनं **तत्** **वैरं** **यथाकथंचित्** वाङ्मात्रेणापि **क्षिण्वन्तु** हिंसन्तु लब्धावकाशात् । ( १२ ) **द्यूतं**[6] **पुराणो व्यवहारः प्रणीतः** इत्यादेः **क्षिप्रमानय दुर्धर्षं कुन्तीपुत्रं युधिष्ठिरम्** ( २६ ) इत्यन्तस्य अनर्थोऽयं मन्मूलघातीति जानतामपि गले गृहीत्वा हुतभुजि पात्यमानानामिव दुरतिक्रमेश्वरेच्छया प्रवृत्तिरिति तात्पर्यार्थः । **पुराणः** अनादिः **व्यवहारः** प्रवृत्तिः **प्रणीतः** प्रकृष्टैर्नलादिभिरनुष्ठितः **संप्रहारः** युद्धम् । ( १३ ) **स्वर्गद्वारम्** उत्कृष्टप्रीतिसाधनं **तद्वर्तिनां** तस्मिन् दृष्टतया वर्तितुं शीलं येषां **तथैव** स्वर्गद्वारं **युक्तम्** उचितं **भवेदेवम् एव** दैवादित्यन्वयः । **आत्मना** आत्मसुखेन मोक्षणं **तुल्यं** **दुरोदरं** द्यूतम् । ( १४ ) **न हीदृशं** त्वयि निर्मर्यादे **धर्म्यं भावि** भवनशीलमित्यन्वयः । ( १५ ) **विदुरेण पूर्वम् एव** इत्यन्वयः । **बुद्धिः** अध्यवसायव्यापारा धीः **विद्या** बृहस्पत्यादिप्रणीतं नीतिशास्त्रम् । **अवशस्य** दैवाधीनस्य । ( १७ ) **स्फाटिकम्**[7] । ( १८ ) **प्रज्ञादर्शाः**[8] प्रज्ञानिपुणाः । ( १९ ) **निष्ठा** निष्पत्तिः **आस्तरैः**[9] शयनैः **प्रतीताः** आप्ताः । ( २४ ) **प्रैषं** प्रेषणम् । ( २५ ) **दिष्टस्य** दैवस्य ।

---

१ Ed. स्थिरबुद्धयः; **C**d with B1.6 m D1.2.5. २ D2 यां त्वमेनां. ३ Ed. ममास्तरम्; **C**d with Ñ1 B1.5.6 Dn D1.2 G6. ४ Ed. ते. ५ Ed. विमोक्षयेच्चाप्यसिसायकांश्च. ६ Ed. द्यूतं पुराणैर्व्य.... ७ Ed. -स्फाटिश्रृङ्गाम्; comm. in D2 स्फाटिकी. ८ Ed. प्राज्ञा दक्षा. ९ Ed. आसनैः.

## ५२

( १ ) **ततः प्रायाद्विदुरोऽश्वैरुदारैः** इत्यादेः **प्रययुर्हृष्टमनस इन्द्रप्रस्थं पुरोत्तमम्** ( अ० ६५.१७ ) इत्यन्तस्य सृष्टिस्थितिसंहारैः क्रीडता परमेश्वरेण भूभारभूतानां राज्ञां युद्धादुपसंहारः पुरा संकल्पितः । ईश्वरसंकल्पसहकारितया च त्रिलोकीसुभटाः पञ्चेन्द्राः पाण्डुपुत्रतां गताः । तत्र चाजातशत्रोः क्षमामभिभूय क्रोधमुद्भावयितुं द्यूतादन्यो नोपायोऽस्तीति द्यूतेन तत्र परुषा गिरः सर्वस्वहरणं द्रौपदीधर्षणमित्येवमादिशतसहस्रापराधभावेन भगवद्दिष्टैः परिणताः अजातशत्रुचेतसि क्रोधमुत्पादयन्तीति तात्पर्यार्थः । तत्र च युधिष्ठिराशयानुसारेण द्यूते युद्धे च आहूतस्य[1] क्षत्रियस्यापराङ्मुखत्वं स्वधर्म इत्यवान्तरतात्पर्यार्थः । दुर्योधननाशानुसारेण पाण्डवपरिभवः । अन्यप्रत्ययान्तरप्रकारेण तात्पर्यं वक्ष्यामः । ( ४ ) सत्ये धृतिः अवसादो यस्य [ **सत्यधृतिः** ] । ( ५ ) **अनुलोमा** अनुकूलाः **विशो** मनुष्याः । ( ६ ) पुत्रेषु स्नेहमोहादिभिः गुणैः [ **पुत्रगुणैः**[2] ] **विनीतः**[3] विरुद्धमार्गं नीतः । **आत्मरतिः**[4] आत्मन्येव रतिः श्रद्धा यस्य । नास्मद्वचनं शृणोति । **दृढात्मा** दृढः कठिनः आत्मा मनो यस्य । ( ७ ) **अव्ययं** धनादेरविनाशम् । ( ९ ) **दुरोदराः** कितवाः । ( १३ ) **राजातिदेवी** राज्ञः सर्वानतिक्रम्य देवितुं शीलमस्य । **कृतहस्तो**[5] यथेष्टमक्षपातकः **मताक्षः** ज्ञाताक्षः । ( १४ ) **महाभयाः** महद्भयं येभ्यः **मायोपधा** मायया छलेन उपधा परीक्षणं येषां **दिष्टस्य** आज्ञापितस्य । ( १५ ) **दुरोदरं** द्यूतम् । ( १७ ) **प्रायात्रिकं** प्रायाणिकम् । ( १८ ) **सितः** बद्धः । ( २० ) **परिच्छन्नः** परिमितपरिवारः । ( २१ ) **कालस्य** दैवस्य **समयेन** संकेतेन । ( ३२ ) **प्रमनसः** प्रकृष्टमनसः । ( ३६ ) **रतिविहारिणी**[6] रतिविहारो विद्यते यस्याम् ।

## ५३

( १ ) **उपस्तीर्णा** दत्तासना **कृतक्षणाः** कृतनियमाः **उप्त्वा** पातयित्वा

---

१ Do व्यापृतस्य for आहूतस्य. २ Ed. पुत्रगणैः; **Cd** with Ś1 K2. 4 Ñ1 B1–4 Dn D1. 2. 6 G5. 6 M1. ३ Ed. विनीतैः; **Cd** with K4 Ñ1 V1 B4 Dn D3. 5. 6. ४ D2 omits from आत्मरतिः up to यस्य. ५ Ed. in the Crit. App. says, "**Cd** cites अकृतहस्त-" which appears to be a mistake. ६ Ed. रतिविहारिणाम्; **Cd** with B1. 8 D1. 2 G4.

**समयः** संकेतः। (२) **निकृतिः** परवञ्चनं **पापं** पापहेतुत्वात्। (३) **अमार्गेण** अन्यायेन। (४) **संख्यां** [१]गणानां **निकृतौ** छले **विधिज्ञः** इतिकर्तव्यवित् **अखिन्नः** अश्रान्तः **अक्षजासु** अक्षनिपतनेषु। (५) **अक्षग्रहः**[२] अक्षग्रहणरूपा क्रीडा सः एव **अभिभवेत्** स एव च **कालः** क्षयरूपत्वात् **इदमर्थौ**[३] अवसीदति। युधिष्ठिरवचनमनूद्य **मा विशङ्कां** कुरुष्व इति निषिध्य **दीव्यावहे**[४] इति प्रवर्तयति। **पाणं** हस्तापातव्यवहारं धनसंख्यां वा। (६) **यो** देवलोकानां भूरादीनां द्वाराणि [**लोकद्वाराणि**] मार्गान् व्यवहारान् वा **संचरते** इत्यन्वयः। (७) **देवनम्** अक्षक्रीडनं विजिगीषा वा **निकृत्या** मायया। (८) **म्लेच्छन्ति** अपशब्दं कुर्वन्ति **भाषाभिः** संकेतरूपाभिः **मायया** परवञ्चनेन **अजिह्मं** अवक्रम् **अशठम्** अवञ्चकम्। (९) **ब्राह्मणार्थाय**[५] ब्राह्मणप्रयोजनाय **शिक्षितुं** विद्यामुपदातुं **मातिदेवीः** सन्मार्गमतिक्रम्य मा देवीः मा क्रीड। (१०) **वृत्तं** चरितम् **एतत्** प्रवञ्चनात्मकं **कितवस्य अनिकृतेः** निकृतिशून्येन कितवेनापि **न पूज्यते** इत्यन्वयः। (११) **श्रोत्रियो** जन्मसंस्कारविद्यासंपन्नः **अश्रोत्रियं** तद्विपरीतं **विद्वान्** ज्ञाता **अविदुषम्**[६] अविज्ञातारं **कृतास्त्रः**[७] **अकृतास्त्रं बलवान् दुर्बलम्** जिगीषया **अभ्येति** इति लोकव्यवहारोऽयम्। (१२) **तद् यदि** अभिज्ञत्वादिगुणेषु **निकृतिम्** आरोप्य बिभेषि तर्हि द्यूतात् **निवर्तस्व** पलायमानः। (१४) यः प्रयुङ्क्ते स **प्रतिपाणः** द्यूतप्रतिभूः। (१७) **उपोह्यमाने** क्रियमाणे पर्यालोच्यमाने वा। (१८) **नातिप्रतितमनसः**[८] नातिहृष्टचित्ताः। (१९) **सिंहग्रीवाः** सिंहसमाः। (२३) **प्रतिपाणः** द्यूतार्थं स्थापितं धनम्। (२४) **मत्सरो** लोभः।

## ५४

(२) **भाण्डिनः**[९] पात्रविशेषाः **निष्कं** पणं **हिरण्यं** हेमपात्रं तदेव **अक्षय्यं**

१ $D_2$ गुणानां. २ Ed. अक्षग्लहः. ३ Ed. इदमात्थ; Cd इदमर्थे or इदमर्थौ, cf. $K_1$. ४ Ed. दीव्यामहे; Cd with $Ś_1$ $K_2$ $G_{1,5}$ $M_2$. ५ Ed. ब्राह्मणान्वन्द्यान्; Cd with $Ñ_1$ $B_5$, $D_{3,5}$ $G_5$. ६ Ed. अविदुषो. ७ Ed. in the Crit. App. अकृतास्त्रं कृतास्त्राश्च दुर्बलं बलवत्तरः. ८ Ed. नातीवप्रीतमनसः Cd seems to have read नातिप्रतीतमनसः according to the Crit. App. ९ Ed. कुण्डिनो; Cd with $B_5$ $D_{3-5}$.

**जातरूपम्** । ( ४ ) समितः समानतया मितः रथानां सहस्रेण [ **सहस्रसमितो** ] **वैयाघ्रः** व्याघ्रचर्मणावनद्धः **सुप्रतिष्ठितः**[1] शोभनास्थितिः **उपस्करः** उपकरणम् । ( ५ ) **संह्लादनः** सुनादः **उपावहत्** आनीतवान् । ( ६ ) **कुररच्छायाः** कुररपक्षिसदृशाः **मुच्येत**[2] वेगेन । ( ८ ) **पाद्मिनो** बिन्दुजालेन **हेममालिनः** हेमस्रग्विणः । ( ९ ) **अष्टकरेणवः** अष्टहस्तिनीकाः । ( १२ ) **हेमभद्रकाः**[3] हेममण्डिताः **निष्ककण्ठ्यः** कण्ठिकाकण्ठ्यः । ( १४ ) **अनुसेवाम्** अनुकूलां सेवां **सामसु** गीतिषु । ( १६ ) **प्रदक्षिणाः** अनुकूलाः **अनुलोमाः** अनुवृत्तिमन्तः **प्रावारः** प्रच्छदपटः । ( १९ ) **हेमभाण्डाः** हेमालंकृताः । ( २० ) **भृतिं** वेतनम् । ( २१ ) **दुरात्मवान्** दुष्टमनाः । ( २४ ) **वाहैः** अश्वैः **उच्चावचैः** नानाविधैः ।

## ५५

( ३ ) **काव्यां** वर्णनीयाम् अथ वा औशनसीम् । ( ४ ) **माध्विको** मधुपण्यवान् प्रपतन्ति अस्मात् इति **प्रपातः मज्जति** मक्षिकाभिर्भक्षितोऽवसीदति । ( ७ ) **नियोगात्** विधेर्निदेशात् । ( ११ ) **भयंकरः** देवानाम् । **काव्यः** शुक्रः । ( १३ ) **आयतिम्** उत्तरकालं **तदात्वं** सांप्रतकालम् । ( १४ ) **पक्षिहा** पक्षिनिग्रहीता । ( १५ ) **आरामः** जालं (?) पाण्डवेषु **इव स्नेहं** भेदाय स्नेहविघटनाय रणाय वा ।

## ५६

( १ ) **प्रातिपीयाः** प्रतीपगोत्रसंभवाः कौरवाः पाण्डवाः **शांतनवास्ते** एव **भैमसेनाः** विदर्भाधिपकुलसंभवाः । ( ३ ) **मदेन** पराभिभवेच्छया **क्षेमं** प्रतिपक्षनिराकरणम् । **अपोहति** अपकर्षति । ( ४ ) **अन्वेति** कम्पयति **वीरः** पुरुषः **कविः** ईक्षमाणः प्रेक्षकः **अभिपत्य**[4] आश्रित्य **बालनेत्रां** केशरज्जुर्बालमयी हि रज्जुर्लवणेन द्रवति । ( ५ ) **ग्लहते** पणायते **प्रीयायसे**[5] प्रियमिवाचरसि । **अतिनर्मा**[6] अतीत्य नर्मक्रीडायाः । **संप्रहारो** युद्धम् । ( ६ )

---

१ Ed. सुप्रवर्तितः; **Cd** with Ś1 K Dn D6 M2. २ Ed. नैषामुच्येत; **Cd** नैषां मुच्येत (?). ३ Ed. मे प्रभद्रिकाः. ४ Ed. अतिपत्य; **Cd** with Ś1 K1.4 B2. ५ Ed. प्रियायसे; **Cd** with K4 Ñ1 V1 B2.4.5 Dn D4.5. ६ Ed. अतिनर्माद्.

**आकर्षस्ते वाक्फलः [1]सुप्रणीतो हृदि प्रौढो मन्त्रपदः समाधिः । युधिष्ठिरेण सफलः संस्तवोऽस्तु साम्नः सुरिक्तोऽरिमतेः सुधन्वा ॥ संस्तवः** समीचीना स्तुतिः **युधिष्ठिरेण** कर्त्रा **अस्तु** भवतु तेन वः **हृदि** मनसि **सफलः** उत्तरकालीनया प्रीत्या **साम्नः** सान्त्वनोपायात् **सुरिक्तोऽरिमतेः** अरिमत्या शून्य इत्यर्थः । **सुधन्वा** शोभनानि पञ्चानां पाण्डवानां धनूंषि यत्र । अथ वा **सुरिक्तो** दोषैरिति शेषः । शत्रुयुद्धे **सुधन्वा** मरुजलभूमिरिति यावत् । **आकर्षः** आकर्षणं संपदामिति शेषः । **वाक्फलः** वाचा वाङ्मात्रेण फलं यस्मिन् । **सुप्रणीतः** शोभनं प्रणीतं प्रणयो यस्मिन् । **मन्त्रपदः** मन्त्रः पञ्चाङ्गः पदं मार्गः यत्र । अथ वा समाधिः इव **समाधिः** द्वैताभावात् । ( ७ ) **प्रातिपीयाः शांतनवाश्च राजन्काव्यां वाचं शृण्वत[2] माद्य कुप्य । वैश्वानरं प्रज्वलितं सुघोरमयुद्धेनेव शमस्वो[3]त्पतन्तम् ॥** हे प्रतीपकुलसंभवाः शांतनुकुलसंभवाश्च **राजन्** धृतराष्ट्र नीत्यपेक्षया शृणु **अद्य** इदानीम् इतरत्र **शृण्वत** इत्यन्वयः । **काव्यां** वर्णनीयां तां शिष्टैरनुमतां **मा कुप्य** मा कोपं कुरु । शेषं सुगमम् । ( ८ ) द्वीपः इव **द्वीपः** आश्रयः । ( ९ ) **प्रभवः**[4] प्रभुभावः प्रागेव **द्यूतात्** युधिष्ठिरधने स्वामित्वमिच्छतो द्यूतं व्यर्थम् । **वसु विन्देह पार्थान्** वसुरूपान्पार्थान्लभस्व । ( १० ) **मां युयुधः**[5] मा योधय ।

## ५७

( १ ) **यत्प्रियः** ये प्रियाः यस्य **बालान्** मूर्खान् । ( २ ) **सुविज्ञेयः** लिङ्गेनेति शेषः । **अन्यत्रकामो** अन्यत्रस्नेहो अर्थात् अन्यत्रकामोऽपि लिङ्गं दर्शयति **निन्दास्तुती**[6] इति । **जिह्वा** करणं वाक् । **मनः** संकल्पविकल्पव्यापारम् । **हृदयं** अध्यवसायव्यापारां धियं **निर्व्यनक्ति** प्रकटयति । **ज्यायः प्रातिकूल्यं** ज्येष्ठप्रातिकूल्यम् । ( ३ ) **पापीयं**[7] पापाय हितम् । ( ४ ) **द्विषद्भ्यो**[8] द्विष-

१ Ed. कुप्रर्णातो ; Cd with $K_{1.3}$ $\tilde{N}_1$ $V_1$ $B_{1.2.4.5}$ Dn $D_{1.2.6}$ $G_{2-4}$. २ Ed. शणुत माल्यगाद्वः ; Cd श्रृण्वत माद्य कुप्य with $K_{2.3}$. ३ Ed. युद्धेन प्रशमयतोत्पतन्तम् ।. ४ Ed. $D_2$ प्रादुर्भावः. ५ Ed. मायायोधी ; Cd with $K_3$. ६ Ed. निन्दाप्रशंसे. ७ Ed. पार्पायः ; Cd with $K_{1.4}$ $\tilde{N}_1$ $B_{2.4.6}$ Dn $D_{1.2}$ $G_{2.4.6}$. ८ Ed. द्विषद्भिः ; Cd with $K_{2.3}$ $B_{1.3.4.6}$ $D_{2.6}$.

दर्थम्। **संप्रयोगः** सम्यक्प्रयोगः स्नेहकृतसंबन्ध इत्यर्थः। **द्वेषं न यासि** इत्यन्वयः। **संप्रमोहात्** स्नेहेन मुग्धत्वात्। (५) **अक्षमम्** अयुक्तं **गुह्यं** गोपनीयं त्वं तु प्रकाशयसीति भावः। **तत्** कुत्सितं कर्म **आश्रितः**[1] **अपत्रपा** लज्जा इति। (७) **तितिक्षून्** क्षमावतः **क्षिणु** जहि। (८) **प्रवणात्** निम्नात्। (९) **भिनत्ति शिरसा शैलमहिं भोजयते च यः**। व्यालग्राही। तावपि **तस्य** विधेः **अनुशासनं कुरुतः**[2] इत्यन्वयः। (१०) **मित्रताम् अनु** मित्रतां **वृत्तिः**[3] तामपि **समुपेक्षेत तेन बलात्** अनुशासनेनेत्यन्वयः। **पण्डित**[4] इत्यामन्त्रणमुपहासे। (११) **प्राक्** प्रथमं **प्रदीप्य** प्रदीपेन शेषमिति शेषः। **प्रदीप्तात् नाभिधावति** न पलायते। प्रकृते तु आश्रयभूतानस्मान् वागग्निना दग्धान्। पलायमानस्य नात्माप्यवशिष्यते इति भावः। (१२) परवर्गस्य शत्रोरिदं **पारवर्ग्यम्**। (१३) **विप्लुतानि**[5] असूयादिना। (१४) **अबालस्त्वं** पण्डितस्त्वं **बालो** मूर्खः सन् **मन्यसे** अभिमन्यसे। अभिमानं दर्शयति **अहमेव इति**। एवशब्दो भिन्नक्रमोऽहमित्येतस्यानन्तरं योज्यः। **अबालत्वम्** इति पाठे अबालो युवा शिशुरिति अवमन्यसे शिशुत्वात्। (१५) **ध्रुवं** शाश्वतं कालान्तरेऽप्यबाध्यमानं **भरतर्षभस्य** इत्युपहासे। (१६) **अनुप्रियं** अनन्तराप्रियं परिणतिविरसम्। (१७) प्रियवाक् रुच्यनुसारिणी वागस्य [ **अनुप्रियवाग्** ]। (१८) **पराश्वस्य प्रियाप्रिये** रुच्यरुची **पथ्यानि** परिणामे सुरसानि। (१९) **अव्याधिजं कटुकम्** इति अव्याधये अरोगाय जातमौषधमित्यर्थः। **कटुकं** निम्बादीव अप्रीतिकरत्वात् **तीक्ष्णं** क्षुरादिवच्छेदकत्वात् **उष्णं** मरीचादिवद्दाहकत्वात्। **यशोमुषम्** अपीयमानम् अकीर्तिकरं यस्मात् **परुषं** शाणवत् कर्कशत्वेन सुखतनूकरणात् पूतिगन्धि इव **पूतिगन्धि** कुत्सितत्वात् **संतापेयं**[6] अग्निवत्संतापकरं **सतां पेय**मिति वा पाठः। **पिब** बाह्यान्विकारान् निरुध्याभ्यन्तराणां जाठराग्निनेव विवेकेन जरय। (२१) **आशीविषाः**[7] दंष्ट्राविषाः **दृष्टिविषाः**[8] चक्षुर्विषाः।

---

१ Ed. आश्रिता. २ Ed. कुरुते; Cd seems to have read तावपि तस्य कुरुतः. ३ Ed. वृत्तं. ४ Ed. पण्डितः. ५ Ed. परिप्लुतानि. ६ Ed. सतां पेयं; Cd notes this as alternative reading. ७ Ed. आशीर्विषान्. ८ Ed. नेत्रविषान्.

५८

( १७ ) **सुमनसो**[१] अभिन्ननयाः सुष्ठुमनसः । ( ३५ ) **संविशति** शेते । ( ३६ ) **वेदीमध्या** क्षाममध्या । ( ४१ ) आकारं हर्षकृतमनुभावम् ।

५९

( १ ) **परैतु** आगच्छतु । ( २ ) **दुर्विभाव्यं** दुर्जयम् । ( ४ ) **अनीशेन** पूर्वं स्वयमेव दासभूतेन पश्चात् **कृष्णा** पणिता नो **न दासी** इत्यर्थः । ( ६ ) **अरुंतुदः** मर्मस्पृक् **हीनतो** नीचात् **परम्** उच्चं **रुशतीम्** अकल्याणीम् । ( ८ ) कश्चित् **अजः** छागः छेदाय प्रपातिते खड्गे भग्ने सति **पद्भिः अपास्य** अपकीर्य **भूमिं शस्त्रम्** अन्यत् **अखनत् स्वस्य कण्ठस्य निकृन्तनं** तथा त्वमपि पाण्डवैः सह **वैरं मा खनीः** । ( ९ ) **श्वनराः** शुना तुल्याः नराः । ( ११ ) **मज्जन्त्यलाबूनि** धार्मिका अधो यान्ति । **शिलाः प्लवन्ते** अधार्मिका उच्चैः व्रजन्ति । **उह्यन्ति**[२] **नावो** धनेन हि दृष्टादृष्टया क्रियया पुरुषा पारं नीयन्ते त्वया तु द्यूतेनापि धनमेव पारं नीयते इति भावः ।

६०

( ३ ) **सिंहगोष्ठं** सिंहस्थानम् । ( ५ ) **आहो** वितर्के **कैतवं** पणितव्यम् । ( १२ ) **लघीयान्** लघुबुद्धिः । ( १३ ) **नूनं** निश्चितं **संविधाता** विधिः **स्पर्शौ** सुखदुःखे **धीरबालौ** पण्डितमूर्खौ **स्पृशतः** भोग्यतया संसर्गं गच्छतः **धर्मं** देशनालक्षणमर्थम् **एकम्** अद्वितीयं **परमम्** उत्कृष्टं **सः** धर्मः **शमं** क्षयं **धास्यति** संहरिष्यति इति यावत् **गोप्यमानः** रक्ष्यमाणः । ( १५ ) **नीवी** जघनवस्त्रग्रन्थिः । ( १७ ) **संबाध्य मानं** दुर्योधनस्याज्ञापालनलक्षणां पूजां विहाय[३] । ( १८ ) **उद्विजते** बिभेति । ( २० ) **परैहि** आगच्छ । ( २२ ) **ऊर्मिमत्सु** कान्तिमत्तरङ्गवत्सु । ( २३ ) **प्रमृष्टाः** स्पृष्टाः । ( २६ ) कृष्णं हरिं वासुदेवं **कृष्णं नरम्** अर्जुनम् [ **कृष्णं च कृष्णं च**[४] ] । ( २७ ) **यथोपजोषं**

---

१ Ed. सुमनसां; **Cd** with D2 T1 G1–4 M. २ Ed मुह्यन्ति; **Cd** with Ś1 K1. 3. ३ Ed. विहाय मानं; Ed. says **Cd** as in text (?). ४ Ed. कृष्णं च जिष्णुं च; **Cd** with Ś1 K1. 3 Ñ1.

यथासुखम् । ( २९ ) **गुरुस्थानाः** गुरुतुल्याः । ( ३२ ) **अन्वपत्यन्**[1] प्राप्तवत्यस्मि । ( ३३ ) **अभ्यतीतां** तां सर्वनीतिं कुरूणां धर्ममर्यादां [ **कुरुधर्मवेलाम्** ] । ( ३४ ) **सत्त्वं** ज्ञानं **राज्ञः** धृतराष्ट्रस्य । ( ३५ ) **कटाक्षेण**[2] ईषदवलोकनेन । ( ४२ ) **अद्वितीयः** अप्रतिमल्लः **निसृष्टकामः** साक्षीकृतः । ( ४३ ) **नातिकृतप्रयत्नः** अनभ्यस्तद्यूतः । ( ४५ ) **विब्रूत** विविच्य ब्रूत ।

## ६१

( २ ) **बलं**[3] सैन्यम् । ( ४ ) **अतिकृतं** अतिक्रम्य मार्गं कृतम् । ( ९ ) **परकामेन** परेच्छया । ( १० ) **निर्दहेयं** दग्धौ कुर्याम् । ( ११ ) **विकर्णः** पाण्डवानाम् अनर्हंकारी[4] दुर्योधनानुजः । ( २७ ) **वैकृतानि** विकारः तस्माज्जातानि **तज्जः अरणिप्रजः** अरणीतः प्रजातः । ( २९ ) **विदीर्यसे** स्फुटसि । ( ३२ ) **अभ्यन्तरा** मध्यवर्तिनी । ( ३८ ) **प्राज्ञवादिकः** प्राज्ञमानी । ( ४३ ) **शशाप** प्रतिज्ञातवान् । ( ५२ ) **पीड्यते** हन्यते । ( ५४ ) **कामक्रोधवशातिगाः** कामक्रोधविवर्जिताः । (५८) **आङ्गिरसस्य** सुधन्वनः । (५९) केशिन्याः कन्यायाः [ **कन्याहेतोः** ] । ( ६० ) विरोचनसुधन्वानौ **पृष्टौ** युवयोः को ज्यायान् इति । तौ **अहं ज्यायान् अहं ज्यायान् इति** विवदमानौ **प्राणाभ्यां** जीविताभ्यां **देवनं** पणं कृतवन्तौ यदि त्वं ज्यायान् मम जीवितं तव तवाहं दासोऽस्मीति यावत् । **प्राणयोरिति**[5] निमित्तसप्तमी । ( ६२ ) **ब्रह्मदण्डः** ब्रह्मशापः । ( ६४ ) **व्यथितः** कम्पितः । ( ६७ ) **प्रतिमुञ्चति** क्षिपति **विब्रुवन्** विविधं ब्रुवन् । (556*) [6]गोकर्णवत् शिथिलं [ **गोकर्णशिथिलं** ] नोच्चैः न नीचैः पक्षौ स्पृशतीति । ( ६८ ) **अञ्जसा** तत्त्वेन । ( ६९ ) **अधर्मेण** धर्मस्य वेधः **धर्मो विद्धो** अवचनात् संशयवचनात् मिथ्यावचनाच्च । ( ७० ) **कर्तृषु** पापकर्तृषु । ( ७१ ) **अनेनाः** निष्पापः **श्रेष्ठो** विचारकः । ( ७३ ) **ऋणिनाम्**[7] अधमर्णाम् । ( ७४ ) **अध्यूढायाः** कृतपतिकायाः ।

---

१ Ed. अन्वपद्यन् ; **Cd** writes अन्वपत्यन् for अन्वपद्यन् through mistake. २ Ed. काक्षेण ; **Cd** with $K_1$ $T_1$ $G_{2,6}$ $M_2$. ३ Ed. बलिम्. ४ $D_2$ हितकारी ( for अनर्हं° ). ५ Ed. प्राणयोरिति ; **Cd** seems to read प्राणाभ्यामिति, but प्राणयोरिति is also commented upon. ६ **Cd** with $K_{3,4}$ $\tilde{N}_1$ $V_1$ $B_{1,3-6}$ D S. ७ Ed. ऋणिनं.

( ७६ ) **समक्षदर्शनात्** प्रत्यक्षदर्शनात् **श्रवणात्** आप्तमुखश्रवणात् अस्मर्यमाणदेशकालभवनादिवचनात् स्मरणमिति **धारणम्** । ( ८० ) **परम्** उत्तरम् ।

६२

( १० ) **पार्षतस्य** धृष्टद्युम्नस्य । ( १३ ) **प्रत्युक्तम्** अभ्युत्तरम् । ( १४ ) **परां** सूक्ष्माम् । ( १५ ) **बलवान्** ज्ञानबलवान् **धर्मवेलायां** धर्मविचारसमये बलवान् हठकारी **परैः**[1] धर्मात् अधर्म इत्यर्थः । ( १६ ) **सूक्ष्मत्वात्** सूक्ष्मबुद्धिविषयत्वात् गहनत्वं दुर्गमत्वं बहुसंशयच्छन्नत्वात् । कार्यगौरवं पृथिवीक्षयपर्यन्तत्वात् [ **कार्यस्यास्य च गौरवात्** ] । ( २० ) **आनताः** आनतमुखाः । ( २५ ) **आर्यमध्ये** पण्डितमध्ये । ( २८ ) **चेलावेधान्** वस्त्रभ्रामणानि । ( २९ ) **साची** इति तिर्यक् । ( ३६ ) **सितः** बद्धः । ( ३७ ) **तलासिभिः** चपेटाखड्गैः ।

६३

( ३ ) **अवेद्या**[2] दोषरूपा **पतिषु** बहुषु कामेन इच्छया वृत्तिः [ **कामवृत्तिः** ] **दास्ये** दासभावे सति । ( ६ ) **विरक्तदृष्टिः** विशेषरक्तदृष्टिः । ( १० ) **अपोह्य** अपक्रम्य । ( १२ ) **राधेयम्** अभि लक्ष्य **उत्स्मयित्वा** उच्चैर्हसित्वा । ( १५ ) **स्रोतोभ्यः** छिद्रेभ्यः । ( १६ ) **देवे**[3] देवने **अनयः** अन्यायः **उदपादि** उत्पन्नः । ( १७ ) **अतिद्यूतम्** अतीत्य द्यूतमर्यादां योगो द्यूतेन धनागमः तस्यैव रक्षणं क्षेमः [ **योगक्षेमो** ] । ( १८ ) **दुर्दृष्टे** दुःखधारिते । ( १९ ) **मापयात** मापगच्छत । ( २६ ) **अपायात्** विनाशात् **हितान्वेषी** शान्त्यर्थम् । ( २९ ) **प्रतिविन्ध्यं** युधिष्ठिरसुतम् । ( ३० ) **लालितो** विनयवान् कारितः **अराजपुत्रत्वं**[4] राजपुत्रत्वच्युतिम् ।

६४

( ५ ) **ज्योतींषि** परलोकदर्शकत्वात् **यतः** प्रभृति **सृष्टाः प्रजास्ततः** । ( ६ ) **अमेध्ये** अपवित्रे **शून्ये** श्मशानादौ **उज्झिते** त्यक्ते **उपजायते** उपकाराय जायते । ( ७ ) **इह**[5] सभायां **कथं स्वित्** कः प्रकारो भवेदिति वितर्कः ।

---

१ Ed. परैः ; **Cd** with $K_{1,2}$ $B_2$ Dn. २ Ed. अनवद्या; **Cd** with $D_{1,2}$. ३ Ed. दैवेरितो. ४ Ed. लालितो दासपुत्रत्वं; **Cd** with $Ś_1$ $K_{1-3}$ $D_{1,2}$. ५ Ed. दाराणमभिमर्शनात्; **Cd** दाराणामिह धर्षणात् with $Ś_1$.

**मृष्टवान्**[1] उन्मूलितवान् । ( ८ ) **हीनेन**[2] **उक्ता अनुक्ता वा परुषा गिरः न प्रतिजल्पन्ति** नोत्तरयन्ति । ( ९ ) **प्रत्ययं** ज्ञानम् । ( १० ) **क्रन्धि** छिन्धि । ( १६ ) **जोषं** सुखं मौनं वा **आस्स्व** तिष्ठ ।

६५

( २ ) **अरिष्टं** निर्विघ्नम् । ( ५ ) **बुद्धिः** अध्यवसायरूपा **क्षान्तिः**[3] अपकृतौ प्रतिकारबुद्ध्यनुत्पादः । **अदारौ** पाषाणादौ **न क्रमते** फलवद्भवति । दुर्जने दुर्जना अपि न वाक्शस्त्रं पातयन्ति । दोषोद्भवनस्य तन्ममतया दुर्जने रोषहेतुत्वाभावात् । **दारौ** दारुस्थानीये स्वजने यत्र वाक्शस्त्रछेद्या गुणाः सन्ति तत्र वाक्शस्त्रं निपात्यते इति भावः । ( ७ ) अधमपुरुषाः **संवादे** प्रथमालापेऽपि **परुषं** भाषन्ते **मध्यमास्तु परेण** परुषमुक्ताः परुषं भाषन्ते । ( ८ ) **उत्तमास्तु उक्ता अनुक्ता** वा परुषं न भाषन्ते । ( ९ ) **प्रतिविजानन्तो**[4] प्रत्युत्तरं विन्दतः ।

६६

( १ ) **अनुज्ञातांस्तान्विदित्वा सरत्नधनसंचयान्** इत्यादेः **क्षत्तुः संप्रेषयामास शीघ्रमागम्यतामिति** ( अ० ७०. २३ ) इत्यन्तस्य विदुरेण प्रेरितो धृतराष्ट्रो दैवकृतं विरोधं कुरुपाण्डवानां शमयितुं द्रौपदीवरदानेन दासभावं पाण्डवानामपास्य राज्यं समर्प्य वाचनिकैर्बहुप्रकारैः सान्त्वनेन पाण्डवानां कोपाग्निं शमितवान् तथाविधराज्यदानेन यावत् राजसूयाश्वमेधसहस्रैरपि पुण्यमुत्पाद्यते तावदुत्पादितवान् । तत्पुण्यबलं तत्त्वविरोधप्रशमनमसहमानेन दैवेन पुनरनुद्यूतप्रवर्तनात् क्रोधाग्निः परां काष्ठामुपनीतः स्वयंदत्तापहारकतया च दूरं पुण्यं पापमेव तावदर्जितं यावत्तत्सर्वपार्थिवक्षयो भवतीति तात्पर्यार्थः । ( ४ ) **स्थविरो** वृद्ध इति साक्षेपं वचनम् । **शत्रुसात्** शत्रुवशम् । ( ८ ) **पुरा** निवृत्य **युद्धाद्वा** । ( १४ ) **आकारं** मुखादि **इङ्गितैः** अभिप्रायैः । ( १५ ) **अभिघ्नन्तो** हननाभिप्रायं रथाभिघातेन व्यञ्जयन्तः अथ वा अभिघ्नन्त इव **अभिघ्नन्तः** । **सेनायोगाय** सेनासंनहनाय । ( १६ ) **विप्र-**

---

१ Ed. ... मृष्टजम्. २ Ed. हीनतः. ३ Ed. शान्तिः; Cd with K B₂ Dn D₁.₂. ४ D₂ प्रतिजानन्तः.

**कृताः** अपकृताः । ( २२ ) **परि** उपरि । ( २४ ) **व्यध्वगतान्** दूरगतान् । ( ३० ) **निबोधत** निबोधयत । ( ३४ ) **मा प्रहासिषुः** मा त्यजन्तु । ( ३५ ) **परस्य** विदुरादेः । **प्रतीपा** विपरीता **प्रौढा** प्रकर्षेण क्रूरा इव **क्रूरा** ।

६७

( ७ ) **यथोपजोषं** यथासुखम् । ( १६ ) **अपि** संभावनायाम् । ( २० ) **समुत्क्षेपेण** पणेन । ( २१ ) **ग्लहम्** अक्षम् ।

६८

( ३ ) **चक्रं** तेजः । ( ६ ) **प्रहासिषुः** प्रहसितवन्तः । ( ७ ) **अवमुञ्चन्तु** हरन्तु **निवास्यन्तां** परिधाप्यन्ताम् । ( ९ ) **वासोदयः** गृहोदयः । ( १० ) **यज्ञसेनः** द्रुपदः । ( ११ ) **प्रावारान्** प्रच्छदपटान् **अप्रतिष्ठान्** अगृहान् । ( १३ ) **काकयवा** तण्डुलशून्यानि धान्यानि । ( १६ ) **गान्धारविद्यया** म्लेच्छभाषया अथ वा गान्धारस्य शकुनेर्विद्यया द्यूतविद्यया । ( १९ ) **विवासितम्** आच्छादितं धर्मेण रिपुमर्दनारम्भो निषिद्धो यस्य [ **धर्मनिषिद्धमार्गम्** ][1] . ( २० ) **नृशंसं** हिंस्रं **परुषं** निष्ठुरं **क्रूरः**[2] खलः **विकत्थितुं** वक्तुं **त्वया शक्यं** न लज्जा तवेति भावः । ( २२ ) **मिषतां** पश्यताम् । ( ३२ ) **असूयितारं** गुणवति दोषारोपकं **वक्तारं** वाचालं **प्रस्रष्टारं** कर्तारं **दुरात्मनां** दुर्मनसाम् । ( ४० ) **कुरु कार्याणि** दृष्टादृष्टानि ।

६९

( ६ ) **अगदम्** अव्याधिम् । ( ११ ) समाधिः इव **समाधिः** एकाग्रता । ( १४ ) **सांपराये** परलोके । ( १६ ) **विधारणे** नियमने **विसर्गे** दाने **संयमे** पाशैर्बन्धने । ( १७ ) **आत्मप्रदानं** चराचरेष्वात्मविभजनं **सौम्यं** सोमभावः **उपजीवनं** विद्यामन्त्रादेः । ( १८ ) **भूतेभ्यः** पृथिव्यादिभ्यः । ( 597* ) **वृजिनं** पापम् ।

७०

( १४ ) **अपध्यानं** क्रोधः । ( १८ ) **आधिं** मनःपीडाम् । ( २० )

१ Ed. धर्मनिबद्धमार्गं ; Cd with K4 D2. २ Ed. क्रूरं ; Cd with S1 D8.

**अभिसंधिता** जिता। ( App. I, No. 42, Line 3 ) **अन्तवन्ति** विनाशवन्ति। **असुधर्मे** प्राणधर्मे।

## ७१

( १ ) **कथं गच्छति कौन्तेयो धर्मराजो युधिष्ठिरः** इत्यादेः **उक्तवाश्च गृहीतं च मया पुत्रहितेप्सुना** ( अ० ७२. ३६ ) इत्यन्तस्य दुर्योधनापराधस्य तीव्रसंवेगिनः पाण्डवानां वेषग्रहणे दिव्यैर्भौमैश्चोत्पातैर्विपाकसूचनं तात्पर्यार्थः। ( १० ) **घृणी** दयावान्। ( १५ ) **असक्ताः** परस्परमलग्नाः। ( १९ ) **हतपत्यः** हतभर्तृकाः। ( २० ) कृतं निवापोदकं याभिः [ **कृतोदकाः** ]। ( २१ ) **नैर्ऋतान्** राक्षसान् अथ वा राक्षसकोणपान् **याम्यानि** यमदेवतानि **सामानि** रुदितानि **कौरव** इति धृतराष्ट्रामन्त्रणे। ( २४ ) **व्यवसायं** कर्तव्यबुद्धिम्। ( ३२ ) **द्वीपम्** आश्रयम्। ( ४० ) **देवदत्तो** देवैर्दत्तः। ( ४३ ) **श्रेयः** पारलौकिकम्। ( ४४ ) **वैशसं** वधम्।

## ७२

( ४ ) **शौण्डैः** दक्षैः। ( ८ ) **अपाचीनानि** विपरीतानि। ( ९ ) **कलुषभूतायां** पापभूतायाम। ( १० ) **विनाशान्ते** विनाशसमीपे। ( १३ ) **विभावरीं** दीप्तिमतीं साध्वीं वा। ( १४ ) **दुर्द्यूतं** कपटद्यूतम्। ( २१ ) **निष्टानको** मेघस्येव घोषः।

इति **परमहंसपरिव्राजकाचार्यभट्टारकश्रीदेवबोधकृतौ** महाभारतटीकायां **ज्ञानदीपिकायां** सभापर्व समाप्तम्॥

# MAHĀBHĀRATA PUBLICATIONS

| (i) *Parvans already published* | Rs. | As. |
|---|---|---|
| Vol. I–Ādiparvan ( 1 ), ed., Dr. V. S. Sukthankar; Fasc. 1–7; pp. CXVIII + 996 | 33 | 0 |
| Vol. II–Sabhāparvan ( 2 ), ed., Prof. F. Edgerton; Fasc. 13–14; pp. LXVII + 517 | 12 | 0 |
| Vols. III & IV–Āraṇyakaparvan ( 3 ), ed., Dr. V. S. Sukthankar; Fasc. 11–12; pp. XLII + 1111 | 18 | 0 |
| Vol. V–Virāṭaparvan ( 4 ), ed., Dr. Raghu Vira; Fasc. 8; pp. ix + 362 | 11 | 0 |
| Vol. VI–Udyogaparvan ( 5 ), ed., Dr. S. K. De; Fasc. 9-10; pp. LIV + 739 | 19 | 0 |
| Vol. VII–Bhīṣmaparvan ( 6 ), ed., Dr. S. K. Belvalkar; Fasc. 15–16; pp. cxcv + 802 | 18 | 0 |

( ii ) *Parvans in the press*

Vol. X–Karṇaparvan ( 8 ), ed., Dr. P. L. Vaidya

Vol. XII–Sauptikaparvan ( 10 ), ed., Prof. H. D. Velankar; and
Strīparvan ( 11 ), ed., Dr. V. G. Paranjpe

Vol. XIII–Śāntiparvan ( 12 ), Part I, ed., Dr. S. K. Belvalkar

( iii ) *Parvans under preparation*

Vols. VIII & IX–Droṇaparvan ( 7 ), ed., Dr. S. K. De

Vol. XI–Śalyaparvan ( 9 ), ed., Dr. R. N. Dandekar

Vol. XIII–Śāntīparvan ( 12 ), Pt. II, & Vol. XIV-XV, ed., Dr. S. K. Belvalkar

Vol. XVII–Āśvamedhikaparvan ( 14 ), ed., Prof. R. D. Karmarkar.

| ( iv ) *Devabodha's Jñānadīpikā* | Rs. | As. |
|---|---|---|
| आदिपर्वज्ञानदीपिका edited by Dr. R. N. Dandekar; pp. iv + 107 | 4 | 0 |
| सभापर्वज्ञानदीपिका edited by Dr. S. K. Belvalkar; pp. 4 + 34 | 2 | 0 |
| भीष्मपर्वज्ञानदीपिका edited by Professor R. D. Karmarkar; pp. 44 | 2 | 0 |

| ( v ) *Miscellaneous Works* | Rs. | As. |
|---|---|---|
| Reprint of the Bhagavadgītā portions from the Critical Edition of the Bhīṣmaparvan, ed., Dr. S. K. Belvalkar; pp. xxxii + 108 | 7 | 8 |

*** N. B.— Parts of the Critical Edition are not sold separately. The above prices are for Fascicles as issued. Postage extra.